THE
KĀSHI SANSKRIT SERIES
( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )
41.
( Lexicography Section, No. 1 )

---

NĀNĀRTHA S'ABDA KOṢA

OR

# MEDINĪ KOṢA

BY

S'RĪ MEDINIKARA

नानार्थशब्दकोशापरपर्यायो

# मेदिनीकोशः

श्रीमेदिनिकरनिर्मितः ।

*Edited with an Introduction, Index etc.,*

BY

*Sāhityāchārya*

*Pt. Jagannāth S'āstri Hoshing*

---

PUBLISHED BY

JAYA KRISHNA DĀS HARIDĀS GUPTA

*The Chowkhambā Sanskrit Series Office,*

**Benares City.**

1940.

# उपोद्घातः ।

अथैतत्प्रकाश्यते मेदिनिकरविरचित'नानार्थशब्दकोशा'भिधानं मुद्रयित्वा पुस्तकम् । 'विद्याविलास'मुद्रणालयाधिपतिगोलोकवासिश्रेष्ठिवरश्रीहरिदासगुप्तात्मजश्रीजयकृष्णदासमहोदयैः प्रेरितोऽहं प्रावर्तिषि प्रस्तुतपुस्तकमुद्रणकर्मणि । तदिदं पुस्तकं कलिकातानगर्यामुभयत्र काश्यामेकत्रात्रैव पुरा मुद्रितमभूत् । तत्र स्वीयमेकमाधारभूतं कलिकातानगरीयेणापरेण सह समालोच्य सम्पादितायां प्रस्तुतावृत्तौ भूमिकां, शब्दानुक्रमणिकां, शुद्धिपत्रादिकञ्चापि सन्निवेश्य तदुपयोक्तॄणां विदुषां कृते प्राकाश्यमुपानयम् ।

विद्याविलासाध्यक्षमहोदयानां बलवतीयमिच्छा जागर्ति–'यथासम्भवं सर्वेषामनेकेषां वा कोशानां प्रकाशनं मुद्रणालयादस्माकं जायता'मिति । तदनुकूलमेव प्रयतमानैस्तैः श्रेष्ठिवरैः श्रीमतां श्रीघनानन्दपाण्डेय–श्रीजनार्दनज्योतिर्वित्प्रभृतीनामन्येषां च विदुषां साहाय्येन सङ्गृहीतानि कोशपुस्तकान्यनेकानि स्वान्तिके न्यस्तानि, तान्येव क्रमशः प्रकाशयितुं बद्धपरिकरैस्तैरिदानीं द्वित्रा विद्वांसोऽत्र सम्प्रार्थ्य नियुक्ताः । तत्र साम्प्रतं यावत्- १ हेमचन्द्रकृतोऽनेकार्थसङ्ग्रहः, २ अमरसिंहरचितोऽमरकोशः, ३ श्रीक्षपणकस्यानेकार्थध्वनिमञ्जरी, ४ भट्टमल्लप्रणीताऽऽख्यातचन्द्रिका, ५ पुरुषोत्तमदेवनिर्मित एकाक्षरकोशः, ६ श्रीहर्षोपज्ञो द्विरूपकोशः, ७ महेश्वरेण समुन्नीतो विश्वप्रकाशकोशश्चेति सप्त कोशा मुद्रिता विक्रयार्थं प्रस्तुताः सन्ति । अथ पुनः– ८ नानार्थशब्दकोशापरपर्यायो मेदिनिकरग्रथितो मेदिनीकोशनाम्ना प्रसिद्धः कोशो ग्राहकानुग्राहकमहोदयानां सुधियां पुरस्तादुपायनीक्रियते । एतदुत्तरं च पुरुषोत्तमस्य हारावली हलायुधस्याऽभिधानरत्नमाला वा न चिराय प्रकाशमेष्यतीति समवशिष्टानां कोशानां कृते विद्वद्धौरेयैर्धैर्यमवश्यमभ्युपगन्तव्यम् ।

मेदिनीकोशप्रणेतुः परिचयादिकं न विस्तरेण समुपलभ्यते । उपसंहारात्मकपद्यैस्तर्केण च यावानुपलभ्यते परिचयस्तावतैवाधस्तान्निर्दिष्टेन सन्तोष्टव्यं सुधीभिः । "षट्शतगाथाकोशप्रणयनविख्यातकौशलेनायम् । मेदिनिकरेण कोशः प्राणकरसूनुना विरचितः ॥" इत्यन्तिमभागस्थेन पद्येनामुष्य पितुर्नाम प्राणकर इति, स्वस्य नाम मेदिनिकर इति, षट्शतगाथात्मककोशप्रणेतेति च स्पष्टमवगम्यते ।

अस्य समयस्तु न स्पष्टमवगन्तुं शक्यते। तथापि समालोचनवधया द्वादशी शताब्दीशवीयेति तर्कपदवीमारोहति। तथाच पञ्चदशशताब्द्यां वर्तमानो रायमुकुटः समुल्लिलेख मेदिनिकरमिति न ततः परस्तात्तेन भवितुं शक्यते इति निर्विरोधम्। तथाच द्वादशशताब्द्याः पूर्वं विद्यमानानामेव विदुषां कोशकर्तॄणां ग्रन्थावलोकनमिषेण नामानि समुपन्यस्यतोऽस्य न ततः पूर्वभावित्वं सुतरां सिद्ध्यतीत्यपि न तिरोहितं केषामपि विदुषामितिहासविदाम्। चतुर्दशशताब्दीकेन पृषोदरादिवृत्तिकृता पद्मनाभदत्तेनाप्ययमुट्टङ्कित इति, शिशुपालवधस्य द्वितीयसर्गीयपञ्चषष्टितमस्य पद्यस्य व्याख्यावसरे श्रीमल्लिनाथोऽप्येतं प्रमाणत्वेनोपन्यस्तवानिति ततः पूर्ववर्ती चायमिति सिद्धमेव। श्रीअकेरियासम्पादितायां मङ्खटीकायां मेदिन्या उल्लेखात्तु द्वादशशताब्दीक एवायमिति निर्धारयितुं शक्यते, यतो हि तस्या रचनाकालो द्वादशशताब्द्या अन्तिमश्चतुर्थो भाग इति सम्मतं समेषामितिहासपरायणानां लब्धवर्णानामिति।

स्वपूर्ववर्तिनां कोशप्रणेतॄणां नामान्युल्लिखन्नेष मेदिनिकरो विश्वप्रकाशकोशं बहुदोषं प्रख्यापयन्नपि नैकधा सामञ्जस्यमावहति तेनेति तदाधारः सुष्टु प्रणिनायेदं ग्रन्थरत्नमित्यपि नाविदितं बुद्धिमताम्।

एवमयं कोशस्तोषयिष्यति विपश्चितां मनांसीति सम्पाद्यमानोऽप्यक्षरसंयोजकदोषादस्माकं मतिमान्द्याद्वा क्वचन स्खलनं जनयेच्चेत्तर्हि गुणैकपक्षपातिनः क्षमिष्यन्तीति पूर्णो विश्वासः।

येषां येषां विदुषां पुस्तकानां च साहाय्येनाऽपूयत कार्यमिदं, ते संस्मर्यन्ते साम्प्रतम्। संशोधनादिषु विशिष्टं साहाय्यं विदधतः पणशीकरश्रीरामचन्द्रशास्त्रिणः कया वा विधया सभाजनीया इति न ज्ञायते। नाधिकं किमप्यवशिष्यते वक्तुमित्युपसंहारेऽस्माभिः श्रीमन्तो गुरुचरणा जगन्नियन्तारः काशीपतिश्रीविश्वनाथचरणाश्च प्रणम्यन्ते, विरम्यते च वृथा पल्लवितामस्मादुपोद्घातप्रपञ्चादिति शिवम्।

काशी।<br>१९९७ वैक्रमे वर्षे,<br>मार्गशीर्षशुक्लषष्ठ्याम्

विद्वदनुग्रहभाजनम्—<br>**जगन्नाथशास्त्री होशिङ्गः**

॥ श्रीगणेशाय नमः ॥

# अथ नानार्थशब्दकोशो नाम

# मेदिनीकोशः ।



वृषाङ्काय नमस्तस्मै यस्य मौलिविलम्बिनी ।
जटावेष्टनजां शोभां विभावयति जान्हवी ॥ १ ॥
पातु(१) वो मदकालिम्ना धवलिम्ना रदस्य च ।
गङ्गायमुनयोः सङ्गं वहन्निव गजाननः ॥ २ ॥
पूर्वाचार्यकृतीर्वीक्ष्य शब्दशास्त्रं निरूप्य च ।
नानार्थशब्दकोशोऽयं लिङ्गभेदेन कथ्यते ॥ ३ ॥
प्रायशो रूपभेदेन विशेषणवशात् क्वचित् ।
स्त्रीपुन्नपुंसकं ज्ञेयं विशेषोक्तेश्च कुत्रचित् ॥ ४ ॥
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ५ ॥
रूपाद्व्यक्तं लिङ्गमुक्तं लिपिभ्रान्तिच्छिदे क्वचित् ।
विशेष्यनिघ्नेऽनुक्तेऽपि विज्ञेया वाच्यलिङ्गता ॥ ६ ॥
गुणे शुक्लादिकट्वाद्याः पुंसि स्युस्तद्वति त्रिषु ।
तीक्ष्णाद्याश्च गुणे क्लीबे गुणिलिङ्गास्तु तद्वति ॥ ७ ॥
क्लीबपुंसोरपि स्त्रीत्वं क्वाप्यल्पत्वविवक्षया ।
जातिवाचकशब्दानामपि तत् स्त्रीविवक्षया ॥ ८ ॥
उद्भिदः प्रसवे क्लीबे हरीतक्यादयः स्त्रियाम् ।

---

( १ ) इदं पद्यं क. पुस्तके नास्ति

पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ ९ ॥
प्राङ् नानार्थान्न (१)तल्लिङ्गं द्वयोर्द्वन्द्वेन चैकता ।
शब्दावृत्तिर्न लिङ्गैक्ये सप्तमी न विशेषणे ॥ १० ॥
क्लीबे नपुंसके पुंसि स्त्रियां योषिति च द्वयोः ।
त्रिषु चेत्यादि यद्रूपं तल्लिङ्गस्यैव वाचकम् ॥ ११ ॥
नानार्थः प्रथमान्तोऽत्र सर्वत्रादौ प्रदर्शितः ।
(२)सप्तम्यन्तोऽभिधेयेषु वर्तमानो विनिश्चितः ॥ १२ ॥
एकद्वित्रिचतुःपञ्चषड्वर्णानुक्रमात् कृतः ।
स्वरकाद्यादिकाद्यान्तवर्गैर्नानार्थसङ्ग्रहः ॥ १३ ॥
नानार्थकोशपुस्तकभारार्जनदुःखहानये कृतिनः ।
मेदिनिकरकृतकोशो विशुद्धलिङ्गोऽभिलिख्यतामेकः ॥ १४ ॥

( कैकम् )

को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
कामग्रन्थौ चक्रिणि च (३)पतत्रिणि च पार्थिवे ॥ १५ ॥
मयूरेऽग्नौ (४)न पुंसि स्यात् सुखशीर्षजलेषु कम् ।

( कद्विकम् )

अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ ॥ १६ ॥
अङ्को रूपकभेदाङ्कचिन्हरेखाजिभूषणे ।
रूपकांशाऽन्तिकोत्सङ्गस्थानेऽकं पापदुःखयोः ॥ १७ ॥
एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु ।
कर्कः कर्कोऽनिले वन्हौ शुक्लाश्वे दर्पणे घटे ॥ १८ ॥
कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः ।
कल्कोऽस्त्री घृततैलादिशेषे दम्भे बिभीतके ॥ १९ ॥
(५)विटविट्टयोश्च पापे च त्रिषु पापाशये पुनः ।
काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि ॥ २० ॥

---

( १ ) नानार्थोऽनु-ख. पु. । ( २ ) सप्तम्यन्ताभिधेयेषु-क. पु. ।
( ३ ) पतत्रिपार्थिवे तथा-क. । ( ४ ) च-ख. । ( ५ ) किट्ट-ख. ।

शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः ।
काका स्यात् काकनासायां काकोलीकाकजङ्घयोः ॥ २१ ॥
रक्तिकायां मलप्वां च काकमाच्यां च योषिति ।
काकं सुरतबन्धे स्यात् काकानामपि संहतौ ॥ २२ ॥
किष्कुर्द्वयोर्वितस्तौ च प्रकोष्ठेऽपि करेऽपि च ।
कोकश्चक्रे वृके ज्येष्ठ्यां खर्जूरीद्रुमदर्दुरे ॥ २३ ॥
छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु ।
टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम् ॥ २४ ॥
जङ्घायां स्त्री पुमान् कोपे कोशासिग्रावदारणे ।
तर्कः काङ्क्षावितर्कोहहेतुशास्त्रेषु कथ्यते ॥ २५ ॥
त्रिका कूपस्य नेमौ स्यात् त्रिकं पृष्ठाधरे त्रये ।
तोकं पुत्रे सुतायां च द्विकः स्यात् काककोकयोः ॥ २६ ॥
न्यङ्कुर्मुनौ मृगे पुंसि नाकस्तु त्रिदिवेऽम्बरे ।
नाकुर्मुन्यन्तरे पृथ्वीधरवल्मीकयोः पुमान् ॥ २७ ॥
निष्कमस्त्री साष्टहेमशतं दीनारकर्षयोः ।
वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च ॥ २८ ॥
पङ्कोऽस्त्री कर्दमे पापे पाकः परिणतौ शिशौ ।
केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च ॥ २९ ॥
बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसि ।
भूकं छिद्रे च काले च भेको मण्डूकमेघयोः ॥ ३० ॥
मुष्को मोक्षकवृक्षे स्यात् (१)संहते वृषणेऽपि च ।
मूकस्त्ववाचि ना दैत्ये रङ्कः (२)कृपणमन्दयोः ॥ ३१ ॥
राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् ।
सम्पूर्णेन्दुतिथौ रेकः शङ्कानीचविरेचने ॥ ३२ ॥
रोकस्तु क्रयभिद्दीप्त्योः रोकं नावि चले बिले ।
लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ॥ ३३ ॥

---

(१) सङ्घाते-ख. ।　　(२) रेकः-क. ।

लोको जनेऽपि भुवने वल्कं वल्कलशल्कयोः ।
वङ्कुः पर्याणभागे ना नदीपात्रे च भङ्गुरे ॥ ३४ ॥
शल्कं तु शकले वल्के शको जात्यन्तरे नृपे ।
शङ्कुः संख्याऽस्त्रयादोभित्कीलेशकलुषेषु ना ॥ ३५ ॥
शङ्का त्रासे वितर्के च शाको द्वीपान्तरेऽपि च ।
शक्तौ द्रुमविशेषे च पुमान् हरितकेऽस्त्रियाम् ॥ ३६ ॥
शुको व्याससुते कीरे रावणस्य च मन्त्रिणि ।
शिरीषपादपे पुंसि ग्रन्थिपर्णं नपुंसकम् ॥ ३७ ॥
शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम् ।
शूकोऽस्त्री शुङ्गदलयोः श्लोकः पद्ये यशस्यपि ॥ ३८ ॥
शौकं शुकगणे स्त्रीणां करणे सूक इत्यपि(१) ।
बाणवातोत्पले (२)स्तोकस्त्रिष्वल्पे चातके पुमान् ॥ ३९ ॥

( कत्रिकम् )

अशोकस्त्रिषु निःशोके पुंसि कङ्केल्लिपादपे ।
स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम् ॥ ४० ॥
अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले ।
अर्भकः कामुके क्रूरे निर्भये त्रिषु ना कवौ ॥ ४१ ॥
अनीकोऽस्त्री रणे सैन्येऽप्यणुको निपुणाल्पयोः ।
अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसकम् ॥ ४२ ॥
अनूकं तु कुले शीले पुंसि स्याद् गतजन्मनि ।
अंशुकं श्लक्ष्णवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः ॥ ४३ ॥
अन्तिकं निकटे वाच्यलिङ्गं स्त्री शातलौषधौ ।
चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कथ्यतेऽन्तिका॥४४॥
अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे ।
अम्बिका पार्वतीमात्रोर्धृतराष्ट्रस्य मातरि ॥ ४५ ॥
अन्धिका द्यूतभेदे च रजन्यामपि योषिति ।

( १ ) इत्ययम्-ख. । ( २ ) स्तोकं त्रि०-ख. ।

अम्लिका तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु च ॥ ४६ ॥
अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च ।
आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे ॥ ४७ ॥
आढकी तु तुवर्यां स्त्री परिमाणान्तरे त्रिषु ।
आलोकस्तु पुमान् द्योते दर्शने बन्दिभाषणे ॥ ४८ ॥
आह्निकं दिननिर्वर्त्यं त्रिलिङ्गमथ न द्वयोः ।
नित्यक्रियाभोजनयोर्वृन्दे प्रकरणस्य च ॥ ४९ ॥
आतङ्को रोगसन्तापशङ्कासु मुरजध्वनौ ।
इक्ष्वाकुः कुटुतुम्ब्यां स्त्री सूर्यवंशनृपे पुमान् ॥ ५० ॥
उलूकः पुंसि काकारातिन्द्रे भारतयोधिनि ।
उदर्कं (१)एष्यत्कालीनफले मदनकण्टके ॥ ५१ ॥
उष्मकस्तु निदाघे स्यादातुरे क्षिप्रकारिणि ।
उष्ट्रिका मृत्तिकाभाण्डभेदेऽपि करभस्त्रियाम् ॥ ५२ ॥
ऊर्मिका चाङ्गुलीये स्याद्वस्त्रभङ्गतरङ्गयोः ।
कनकं हेम्नि पुंसि स्यात् किंशुके नागकेसरे ॥ ५३ ॥
धतूरे काञ्चनारे च कालीये चम्पकेऽपि च ।
करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च ॥ ५४ ॥
(२)द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ ।
क्रमुकस्तु पुमान् भद्रमुस्तके ब्रह्मदारुणि ॥ ५५ ॥
फले कार्पासिकायाश्च पट्टिकालोध्रपूगयोः ।
कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डने ॥ ५६ ॥
सामुद्रलवणे राजधानीवलययोरपि ।
कटुका कटुरोहिण्यां स्त्रियां दोषे नपुंसकम् ॥ ५७ ॥
कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे ।
नैयायिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः ॥ ५८ ॥
करङ्को मस्तकेऽशस्यनालिकेरफलास्थनि ।

---

( १ ) एष्यत्काले तत्फले–ख. । ( २ ) द्वयोर्वर्षोपले–ख. ।

कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च ॥ ५९ ॥
कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि ।
क्रमुकादित्वचटांशेऽब्जवराटे कर्णभूषणे ॥ ६० ॥
कणिका कथ्यतेऽत्यन्तसूक्ष्मवस्त्वग्निमन्थयोः ।
कचाकुस्तु दुराधर्षे दुःशीले च (१)बिलेशये ॥ ६१ ॥
कञ्चुको वारबाणे स्यान्निर्मोके करभेऽपि च ।
वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके ॥ ६२ ॥
कञ्चुक्योषधिभेदेऽथ कारिका नटयोषिति ।
कृतौ विवरणश्लोके शिल्पयातनयोरपि ॥ ६३ ॥
नपुंसकं तु कर्मादौ कारकं कर्तरि त्रिषु ।
कार्मुकः कमनेऽशोकपादपे चातिमुक्तके ॥ ६४ ॥
कार्मुकं धनुषि स्यान्ना वेणौ कर्मक्षमेऽन्यवत् ।
कावृकः कुक्कवाकौ स्यात् पीनमस्तककोकयोः ॥ ६५ ॥
क्षारकः पक्षिमत्स्यादिपिटके जालकेऽपि च ।
कालिका चण्डिकाभेदे (२)कार्ण्यवृश्चिकपत्रयोः ॥ ६६ ॥
क्रमदेयवस्तुमूल्ये धूसरीनवमेघयोः ।
पटोलशाखारोमालीमांसीकाकीशिवासु च ॥ ६७ ॥
मेघावलौ च किम्पाको महाकालफलाज्ञयोः ।
कीचको दैत्यभिद्वाताहतसस्वनवंशयोः ॥ ६८ ॥
कीटकः कृमिजातौ ना निष्ठुरे पुनरन्यवत् ।
कुलकं तु पटोले स्यात् सम्बद्धश्लोकसंहतौ ॥ ६९ ॥
पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते ।
क्षुल्लकस्त्रिषु नीचेऽल्पे कुशिको मुनिसर्जयोः ॥ ७० ॥
कुषाकुः कपिवन्ह्यर्के ना परोत्तापिनि त्रिषु ।
कुलिको नागभेदे स्याद् द्रुभेदे कुलसत्तमे ॥ ७१ ॥
क्षुरकः कोकिलाक्षे स्याद् गोक्षुरे तिलकद्रुमे ।

---

( १ ) ना-ख. । ( २ ) कार्त्स्न्ये-क. ।

कूपको गुणवृत्ते स्यात्तैलपात्रे कुकुन्दरे ॥ ७२ ॥
उदपानेऽच्यु(१)तायां तु कूपिकाऽम्भोगतोपले ।
कूलकं न स्त्रियां स्तूपे पुंसि स्यात् कृमिपर्वते ॥ ७३ ॥
कूर्चिका सूचिकायां च तूलिकायां च कुड्मले ।
(२)कपाटोद्भेदने क्षीरविकृतावपि योषिति ॥ ७४ ॥
कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवत् ।
कोरकोऽस्त्री कुड्मले स्यात् कक्कोलकमृणालयोः ॥ ७५ ॥
कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः ।
तथा परम्परायातमङ्गले च कुतूहले ॥ ७६ ॥
विवाहसूत्रगीतादिभोगयोरपि न द्वयोः ।
कौशिको नकुले व्यालग्राहे गुग्गुलुशुक्रयोः ॥ ७७ ॥
कोषज्ञोलूकयोश्च स्याद्विश्वामित्रमुनावपि ।
कौषिकी चण्डिकायां च नदीभेदे च योषिति ॥ ७८ ॥
खनको नोन्दुरौ सन्धिचौरे त्रिष्ववदारके ।
खड्गिको महिषीक्षीरे फेनशौनिकयोरपि ॥ ७९ ॥
स्यात् खोलकस्तु पाके शिरस्त्रवल्मीकपूगकोशेषु ।
गणिका यूथीवेश्येभीतर्कारीषु ना तु दैवज्ञे ॥ ८० ॥
ग्रन्थिकं पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः ।
करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे ॥ ८१ ॥
गण्डकः पुंसि खड्गे स्यात् संख्याविद्याप्रभेदयोः ।
अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे ॥ ८२ ॥
ग्राहको घातिविहगे व्या(३)धानां च ग्रहीतरि ।
गान्धिको लेखकेऽपि स्यात् सुगन्धिव्यवहारिणि ॥ ८३ ॥
गुण्डको मलिने धूलौ कलोक्तिस्नेहपात्रयोः ।
गुह्यको निध्नके छेके गैरिकं धातुरुक्मयोः ॥ ८४ ॥

---

( १ ) चितायां च–ख. ।　( २ ) कवाटकुटके–ख., कपाटाङ्कुटके–क. ।
( ३ ) व्यालानां–ख., धान्यानां क. ।

गोलको विधवापुत्रे जारात् स्यान्मणिके गुडे ।
गोरङ्कुः स्यात् पुमान् पक्षिभेदे लग्नकबन्दिनोः ॥ ८५ ॥
चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः ।
चलुकः प्रसृतौ भाण्डभेदे चुलुकवत् पुमान् ॥ ८६ ॥
चतुष्की मशकहर्यां पुष्करिण्यन्तरेऽपि च ।
चारकः पालकेऽश्वादेः स्यात् सञ्चारकबन्धयोः ॥ ८७ ॥
चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु ।
चुम्बकश्चुम्बनपरे धूर्तायस्कान्तयोरपि ॥ ८८ ॥
बहुग्रन्थैकदेशज्ञे घटस्योर्द्ध्वावलम्बने ।
चुल्लकी शिशुमारेऽपि कुण्डाभेदे कुलान्तरे ॥ ८९ ॥
चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम् ।
चूतकः कूपकेऽप्याम्रे जनकः पितृभूभुजोः ॥ ९० ॥
जम्बूकः फेरवे नीचे पश्चिमाशापतावपि ।
जतुका जिनपत्रायां जतुकं हिङ्गुलाक्षयोः ॥ ९१ ॥
जाहका गोधामार्जारखट्वाकारुण्डकासु च ।
जालकं कोरके दम्भे कुलायानाययोरपि ॥ ९२ ॥
न पुंसि मोचकफले स्त्रियां तु वसनान्तरे ।
गिरिसारे जलौकायामपि स्याद्विधवास्त्रियाम् ॥ ९३ ॥
भटानामश्मरचिताङ्गरक्षिण्यां च जालिका ।
जालिको वाच्यवद् ग्रामजालिजालोपजीविनोः ॥ ९४ ॥
जीवकः प्राणके पीतशाल(१)क्षपणयोरपि ।
कूर्चशीर्षेऽपि पुंसि स्यादाजीवे जीविका मता ॥ ९५ ॥
त्रिषु सेविनि वृद्ध्याशिजीविनोराहितुण्डिके ।
(२)झल्लिकोद्वर्तनपटे स्त्रियां द्योते च झिल्लिका ॥ ९६ ॥
(३)आतपस्य रुचौ झिण्ट्यां टुण्टुकः शोणकाल्पयोः ।

---

(१) क्षपणयो-ख. । (२) झल्लिकोद्वर्तनमले पटे दीप्तौ च झिल्लिका-ख. ।
(३) उद्वर्तनांशुके झिण्टयां-ख. ।

डिम्बिका जलबिम्बे स्यात् शो(१)णके कामुकस्त्रियाम् ॥९७॥
तण्डकः खञ्जने फेने समासप्रायवाचि च ।
गृहदारुतरुस्कन्धमायाबहुलकेष्वपि ॥ ९८ ॥
तक्षकस्तु पुमान् नागराजभेदे च वर्द्धकौ ।
तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि ॥ ९९ ॥
कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु ।
तिलको द्रुमरोगाश्वभेदेषु तिलकालके ॥ १०० ॥
क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके ।
त्रिशङ्कुर्ना राजभेदे शलभे वृषदंशके ॥ १०१ ॥
तुरुष्कः सिल्हके म्लेच्छजातौ देशान्तरेऽपि च ।
तूलिका कूर्चिकायां च शय्योपकरणेऽपि च ॥ १०२ ॥
दर्शकः स्यात् प्रतीहारे दर्शयितृप्रवीणयोः ।
दारको बालकेऽपि स्याद् भेदके त्वभिधेयवत् ॥ १०३ ॥
द्रावको ग्रावभेदे स्याद्विदग्धे मोषकेऽपि च ।
दीपकं वागलङ्कारे वाच्यवद्दीप्तिकारके ॥ १०४ ॥
दीप्यकं चाजमोदायां यवानीबर्हिचूडयोः ।
दुन्दुको गन्धकुट्यां स्याद्विहाराद्यवकाशके ॥ १०५ ॥
दूषिका तूलिकायां च मले स्याल्लोचनस्य च ।
धनिका साधुनार्यां ना धन्याके त्रिषु साधुधनिनोश्च ॥१०६॥
स्याद्धेनुका करिण्यां धेनावपि ना तु दानवविशेषे ।
धेनुकं करणे स्त्रीणां धेनूनामपि संहतौ ॥ १०७ ॥
नर्तकः केलके(२) पोटगलचारणयोर्नटे ।
नर्तकी लासिकायां च करेण्वामपि योषिति ॥ १०८ ॥
नग्निकाऽपि कुमार्यां स्यात् पुमान् क्षपणबन्दिनोः ।
नरकः पुंसि निरयदेवारातिप्रभेदयोः ॥ १०९ ॥
नन्दको हरिखड्गे च हर्षके कुलपालके ।

( १ ) मोणके–क. ख. । २ केवले–क. ।

नालीकः शरशल्याङ्गेऽब्जखण्डे नपुंसकम् ॥ ११० ॥
नायको नेतरि श्रेष्ठे हारमध्यमणावपि ।
निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके ॥ १११ ॥
नीलिका नीलिनीक्षुद्ररोगशेफालिकासु च ।
पराकस्तु व्रते खड्गे प्रसेकः सेचने च्युतौ ॥ ११२ ॥
प्रतीकोऽवयवेऽपि स्यात् प्रतिकूलविलोमयोः ।
पद्मकं स्यात् पद्मकाष्ठबिन्दुजालकयोरपि ॥ ११३ ॥
पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके ।
पल्यङ्को मञ्चपर्यङ्कवृषीपर्यस्तिकासु च ॥ ११४ ॥
पताका वैजयन्त्यां च सौभाग्यनाटकाङ्कयोः ।
पातुकः पतयालौ स्यात् प्रपातजलहस्तिनोः ॥ ११५ ॥
प्राणकः सत्त्वजाताये जीवकद्रुमचोलयोः ।
पाटकः स्यान्महाकिष्कौ कटकान्तरवाद्ययोः ॥ ११६ ॥
अक्षादिचालने मूलद्रव्यापचयरोधसोः ।
पालङ्कः शल्लकीशाकभेदयोः प्राजिपक्षिणि ॥ ११७ ॥
पावकोऽग्नौ सदाचारे वन्हिमन्थे च चित्रके ।
भल्लातके विडङ्गेऽथ प्रियकः पीतशालके ॥ ११८ ॥
नीपे चित्रमृगे चालौ प्रियङ्गौ कुङ्कुमेऽपि च ।
पिण्याकोऽस्त्री तिलकल्के हिङ्गुवाल्हीकसिल्हके ॥११९॥
पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः ।
पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान् ॥ १२० ॥
पिष्टको घृतपूपादौ नेत्ररोगान्तरेऽपि च ।
पुलकः कृमिभेदे प्रस्तरभेदे च मणिदोषे ॥ १२१ ॥
रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे ।
पुलाकस्तुच्छधान्ये स्यात् सङ्क्षेपे भक्तसिक्थके ॥ १२२ ॥
पुष्पकं रीतिपुष्पे च विमाने धनदस्य च ।
नेत्ररोगे तथा रत्नकङ्कणे च रसाञ्जने ॥ १२३ ॥
लोहकांस्ये मृदङ्गारशकट्यां च नपुंसकम् ।

स्यात् पुत्रिका पुत्तलिकादुहित्रोर्यावतूलके ॥ १२४ ॥
ना पुत्रे शरभे धूर्ते शैलवृक्षप्रभेदयोः ।
पूर्णकः स्वर्णचूडे स्यान्नासाच्छिन्न्यां तु पूर्णिका ॥ १२५ ॥
पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान् ।
पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत् ॥ १२६ ॥
पेचको गजलाङ्गूलमूलोपान्ते च कौशिके ।
(१)पेटकं पुस्तकादीनां मञ्जूषायां कदम्बके ॥ १२७ ॥
वल्मीको रोगभेदे च नाकौ च पुन्नपुंसकम् ।
बन्धूकं बन्धुजीवे स्याद् बन्धूकः पीतशालके ॥ १२८ ॥
बन्धकः स्याद्विनिमये पुंश्चल्यां स्याच्च बन्धकी ।
बहुकः कर्कटे चार्के दात्यूहे जलखातके ॥ १२९ ॥
वराकः शङ्करे पुंसि शोचनीयेऽभिधेयवत् ।
बालकस्तु शिशावज्ञे वालधौ हयहस्तिनोः ॥ १३० ॥
अङ्गुलीयकह्रीबेरवलये पुंसि बालिका ।
बालायां बालुकापत्रकाहलाकर्णभूषणे ॥ १३१ ॥
वारकोऽश्वगतौ पुंसि वाच्यवत् स्यान्निषेधके ।
बालुका सिकतासु स्याद् वालुकं त्वेलबालुके(२) ॥ १३२ ॥
भर्मकं रोगभेदे स्याद्विडङ्गकलधौतयोः ।
भ्रामको जम्बुके धूर्ते सूर्यावर्त्ताश्मभेदयोः ॥ १३३ ॥
भालाङ्कः करपत्रे स्याच्छाकभेदे च रोहिते ।
महालक्षणसम्पन्नपुरुषे कच्छपे हरे ॥ १३४ ॥
भूमिका रचनायां स्याद्वेशान्तरपरिग्रहे ।
भूतीकमपि भूनिम्बे दीप्यकर्पूरके तृणे ॥ १३५ ॥
मधुका मधुपर्ण्यां स्या(३)न्मधुकं क्लीतके खगे ।
वेल्यन्तरे ना मशको रोगकीटप्रभेदयोः ॥ १३६ ॥

---

( १ ) पेटकः—क. । ( २ ) बालुकास्त्वेलवालुके–ख. ।
( ३ ) स्त्री–ख. ।

मण्डूकः शोणके मुन्यन्तरे स्याद् गूढवर्चसि ।
मण्डूकपर्ण्यां मण्डूकी मल्लिको हंसभिद्यपि ॥ १३७ ॥
माल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः ।
मामकं स्यान्मदीयार्थे त्रिषु पुंसि तु मातुले ॥ १३८ ॥
मातृका धातृकामात्रोर्देवीभिद्वर्णमालयोः ।
मालिका सप्तलापुत्रीग्रीवालङ्करणेषु च ॥ १३९ ॥
पुष्पमाल्ये नदीभेदे पक्षिभेदे तु मालिकः ।
मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् ॥ १४० ॥
तद्युक्ते वाच्यवत् क्लीबं स्रोतोञ्जनान्धकारयोः ।
मोचकः कदलीशिग्रुनिर्मोचकविरागिषु ॥ १४१ ॥
मोदकः खाद्यभेदेऽस्त्री हर्षुके पुनरन्यवत् ।
यमकं यमजे शब्दालङ्कारे पुंसि संयमे ॥ १४२ ॥
याजकस्तु गजे राज्ञो या ज्ञकेऽप्यथ याज्ञिकः ।
याजके च कुशे चाथ युतकं संशये युगे ॥ १४३ ॥
नारीवस्त्राञ्चले युक्ते चलनाग्रेऽपि यौतके ।
यूथिका म्लानके पुष्पविशेषेऽपि च योषिति ॥ १४४ ॥
रसिका स्त्री रसालेक्षुरसयोः सरसे त्रिषु ।
रक्तकोऽम्लानबन्धूकरक्तवस्त्रानुरागिषु ॥ १४५ ॥
राजिकाऽपि च केदारे राजसर्षपरेखयोः ।
रात्रकं पञ्चरात्रे ना वेश्यावेश्माब्दवासिनि ॥ १४६ ॥
रुचको बीजपूरे च निष्के दन्तकपोतयोः ।
न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः ॥ १४७ ॥
सौवर्चलेऽपि माङ्गल्यद्रव्ये चाप्युत्कटेऽपि च ।
रुण्डिका द्वारपिण्ड्यां च दूतिकायां रणक्षितौ ॥ १४८ ॥
रूपकं नाटके मूर्त्ते काव्यालङ्करणेऽपि च ।
रेणुकाऽपि हरेणौ च जामदग्न्यस्य मातरि ॥ १४९ ॥
रोहकः प्रेतभेदे ना रोढरि त्रिषु विश्रुतः (१) ।

---

( १ ) इदमर्धं पद्यं नास्ति-ख० ।

लम्पाको लम्पटे देशे लासको लास्यकारिणि ॥ १५० ॥
मयूरे लसके चाथ लूनको भेदिते पशौ ।
लोचको मांसपिण्डेऽक्षितारकायां च कज्जले ॥ १५१ ॥
ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयोः ।
निर्बुद्धौ कर्णपूरे च मौर्व्यां भ्रूश्लथचर्मणि ॥ १५२ ॥
वसुकं रौमके पुंसि शिवमल्ल्यर्कपर्णयोः ।
वर्णकश्चारणेऽस्त्री तु चन्दने च विलेपने ॥ १५३ ॥
द्वयोर्नाल्यादिषु स्त्री स्यादुत्कर्षे कथनस्य च ।
वर्तकस्तु खुरेऽश्वस्य विहगे वर्तको द्वयोः ॥ १५४ ॥
वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके ।
व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने ॥ १५५ ॥
ना नागरेऽथ वाल्हीकं वाल्हिकं धीरहिङ्गुनोः ।
द्वावेतौ पुंसि देशस्य प्रभेदे तुरगान्तरे ॥ १५६ ॥
वार्द्धकं वृद्धसङ्घाते वृद्धस्य भावकर्मणोः ।
वार्षिकं त्रायमाणायां क्लीबं वर्षाभवे त्रिषु ॥ १५७ ॥
बालकोऽस्त्री पारिहार्य्ये त्रिषु स्यादङ्गुरीयके ।
वितर्कस्तु पुमानूहे संशये च निगद्यते ॥ १५८ ॥
विपाकः पचने स्वादे कर्मणो विसदृक्फले ।
विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः ॥ १५९ ॥
वृश्चिकश्च द्रुणे राशौ शूककीटौषधीभिदाः ।
वृषाङ्कः शङ्करे साधौ भल्लातकमहत्त्वयोः ॥ १६० ॥
वैजिकं शिग्रुतैले स्याद्धेतौ सद्योऽङ्कुरे तु ना ।
शलाका शल्यमदनशारिकाशल्लकीषु च ॥ १६१ ॥
छत्रादिकाष्ठीशरयोः शल्लकी पशुवृक्षयोः ।
शम्बूको गजकुम्भान्ते घोङ्गे च शूद्रतापसे ॥ १६२ ॥
जलजन्तुविशेषे च शम्बूका न नपुंसके ।
शङ्कं वलये कम्बावस्त्री पुंसि शिरोरुजि ॥ १६३ ॥
शार्कः स्याद् दुग्धफेनशर्करापिण्डयोः पुमान् ।

शिशुकः (१)शिशुमारे स्याद्बालकोलूपिनोरपि ॥ १६४ ॥
शीतकः शीतकाले च सुस्थिते दीर्घसूत्रिणि ।
शूककः प्रावटेऽपि स्याद्रसेऽपि परिकीर्तितः ॥ १६५ ॥
सस्यको मणिभेदेऽसौ सम्पर्को मेलके रतौ ।
सम्पाकस्तर्कके धृष्टे त्रिषु ना चतुरङ्गुले ॥ १६६ ॥
स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः ।
स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः ॥ १६७ ॥
सरकोऽस्त्री शीधुपाने शीधुपात्रेक्षुशीधुनोः ।
अच्छिन्नाध्वगपङ्क्तौ च सायकः शरखड्गयोः ॥ १६८ ॥
स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे ।
सूचकः सीवनद्रव्ये बोधके पिशुने शुनि ॥ १६९ ॥
ओतौ काके सूतकोऽस्त्री पारदे न द्वयोर्जनौ ।
सृदाकुर्नाऽनिले वज्रे ज्वलने प्रतिसूर्यके ॥ १७० ॥
सेवकस्तु प्रसेवे ना वाच्यालङ्गोऽनुजीविनि ।
सेचकः स्यात् पुमान् मेघे वाच्यलिङ्गस्तु सेक्तरि ॥ १७१ ॥
सैनिकः सैन्यरक्षे च स्यात् सेनासमवेतके ।
हारकः कितवे चौरे गद्यविज्ञानभेदयोः ॥ १७२ ॥
हुडुक्को वाद्यभेदे च मत्तदात्यूहपक्षिणि ।
हेरुको बुद्धभेदे स्यान्महाकालगणेऽपि च ॥ १७३ ॥

( कचतुष्कम् )

भवेदलिमको भेके पिकेऽलौ पद्मकेसरे ।
मधूकेऽप्यथालिपको भृङ्गकोकिलकुक्कुरे ॥ १७४ ॥
अङ्गारकः कुजेऽपि स्यादुल्मुकांशे कुरुण्टके ।
भवेदङ्गारिका चेक्षुकाण्डे(२) किंशुककोरके ॥ १७५ ॥
स्यादश्मन्तकमुद्धाने मल्लिकाच्छदनेऽपि च ।
आकल्पकस्तमोमोहग्रन्थावुत्कलिकामुदोः ॥ १७६ ॥

( १ ) शूककः-ख. । ( २ ) दण्डे-ख. ।

आक्षेपकोऽनिलव्याधौ व्याधे निन्दाकरेऽपि च ।
भवेदाखनिकश्चौरे शूकरे मूषिकेऽपि च ॥ १७७ ॥
कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु ।
एडमूकोऽन्यलिङ्गः स्याच्छठे वाक्श्रुतिवर्जिते ॥ १७८ ॥
कठिल्लकस्तु पर्णाशे वर्षाभूकारवेल्लयोः ।
कपर्दको वराटे स्याज्जटाजूटे च धूर्जटेः ॥ १७९ ॥
कर्कोटकः स्यान्मालूरकाद्रवेयप्रभेदयोः ।
कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके ॥ १८० ॥
कनीनिका तारकोऽक्ष्णः स्यात् कनिष्ठाङ्गुलावपि ।
कापटिकोऽन्यमर्मज्ञे छात्रे पुंसि शठे त्रिषु ॥ १८१ ॥
काकरूको नग्नदम्भस्त्रीजितोलूकभीरुषु ।
निःस्वे कुरुबकः शोणाम्लानझिण्टीप्रभेदयोः ॥ १८२ ॥
कुरण्टकः पीतपुष्पाम्लानझिण्टीकयोः पुमान् ।
कृकवाकुर्मयूरेऽपि सरटे चरणायुधे ॥ १८३ ॥
कोशातकः (१)कठे पुंसि पटोल्यां घोषके स्त्रियाम् ।
अथ कौक्कुटिकोऽदूरप्रेरिताक्षे च दाम्भिके ॥ १८४ ॥
कौलेयकः सारमेये कुलीनेऽथ खरालिकः ।
ग्रामणीर्भाण्डनाराचेऽप्युपधाने च पुंस्ययम् ॥ १८५ ॥
भवेद् गुणनिका नृत्यशून्याङ्के पाठनिश्चितौ ।
गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे ॥ १८६ ॥
गोमेदकं पीतमणौ काकोले पत्रकेऽपि च ।
स्याद् गोकुलिको वलिरे पङ्कस्थगव्युपेक्षके ॥ १८७ ॥
अथ घर्घरिका क्षुद्रघण्टावादित्रदण्डयोः ।
चर्चरीको महाकाले केशविन्यासशाकयोः ॥ १८८ ॥
चण्डालिका किन्नरायामुमायामोषधीभिदि ।
अथ चातुरकश्चक्रगण्डौ पुंस्यभिधेयवत् ॥ १८९ ॥

---

( १ ) कचे-ख. ।

गोचरे लोचनस्यापि चाटुकारे नियन्तरि ।
जर्जरीकं बहुच्छिद्रे जरातुरेऽपि वाच्यवत् ॥ १९० ॥
जीवन्तिका गुडूच्यां च जीवाख्यशाकवन्दयोः ।
जैवातृकः पुमान् सोमे दीर्घायुःकृशयास्त्रिषु ॥ १९१ ॥
तर्तरीकं वहित्रे स्यान्न द्वयोः पारगे त्रिषु ।
तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे ॥ १९२ ॥
त्रिवर्णकं गोक्षुरके त्रिफलायां कटुत्रिके ।
दलाढकः स्वयं जाततिले पृश्न्यां च गैरिके ॥ १९३ ॥
फेनखातकयोर्नागकेसरे च महत्तरे ।
दन्दशूकस्तु पुल्लिङ्गो राक्षसे च सरीसृपे ॥ १९४ ॥
दासेरकस्तु करभे दासीपुत्रे च धीवरे ।
नियामकः कर्णधारे पोतवाहे नियन्तरि ॥ १९५ ॥
निश्चारकः पुरीषस्य क्षये स्वैरे समीरणे ।
निर्ग्रन्थकः स्यात् क्षपणे निष्फलेऽप्यपरिच्छदे ॥ १९६ ॥
प्रचलाकः शराघाते शिखण्डे च भुजङ्गमे ।
प्रकीर्णकं चामरे स्याद्विस्तारे ना तुरङ्गमे ॥ १९७ ॥
पञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः ।
स्यात् पिप्पलकं वक्षोजवृन्ते सीवनसूत्रके ॥ १९८ ॥
पिण्डीतकः स्यात्तगरे मदनाख्यमहीरुहे ।
अथ पुष्कलको गन्धमृगे क्षपणकीलयोः ॥ १९९ ॥
पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे ।
पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च ॥ २०० ॥
भवेत् पूर्णानकं वर्द्धापने च पटहेऽपि च ।
फर्फरीकश्चपेटे स्यात् फर्फरीकं तु मार्दवे ॥ २०१ ॥
बलाहको गिरौ मेघे दैत्यनागविशेषयोः ।
वराटकः पद्मबीजकोशे रज्जौ कपर्दके ॥ २०२ ॥
बकेरुका बलाकाभिद्वातावर्जितशाखयोः ।
वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके ॥ २०३ ॥

वर्त्तुलेऽथो वाणिजको वाडवाग्नौ वणिज्यपि ।
वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु ॥ २०४ ॥
अथ भ्रमरको भृङ्गे गिरिके चाऽलकान्तरे ।
भट्टारको नृपे नाट्यवाचा देवे तपोधने ॥ २०५ ॥
भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे ।
भार्याटिकः पुमान् भार्यानिर्जिते हरिणान्तरे ॥ २०६ ॥
भवेन्मरुबकः (१)पुष्पविशेषे मदनद्रुमे ।
मण्डोदकं चित्तरागे क्लीबमातर्पणेऽपि च ॥ २०७ ॥
भवेन्मण्डलकं बिम्बे कुष्ठभेदे च दर्पणे ।
अथ मर्कटकः सस्यभेदे वानरलूतयोः ॥ २०८ ॥
मयूरकोऽप्यपामार्गे क्लीबं तुत्थाञ्जने पुनः ।
माणवको हारभेदे बाले कुपुरुषेऽपि (२)च ॥ २०९ ॥
मृष्टेरुको वदान्येऽपि मिष्टाशिन्यतिथिद्विषि ।
रतद्धिकं स्याद्दिवसे सुखस्थानेष्टमङ्गले ॥ २१० ॥
(३)राधरेकः पुमान् सीरे सीरके च घनोपले ।
लालाटिकः प्रभोर्भावदर्शिन्याश्लेषणान्तरे ॥ २११ ॥
कार्याक्षमे, लेखनिकः कथितो लेखहारके ।
लेखेषु परहस्तेन स्वहस्तस्य च लेखके ॥ २१२ ॥
वर्तरूको नदीभेदे काकनीडे जलावटे ।
विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ ॥ २१३ ॥
वितुन्नकस्तु धान्याके झाटामलमयूरके ।
विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु ॥ २१४ ॥
विदूषकश्चाटुबटौ परनिन्दाकरेऽपि च ।
वैनाशिकः स्यात् क्षणिके परतन्त्रोर्णनाभयोः ॥ २१५ ॥
वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च ।
वैतालिकः पुमान् खेट्टिताले बोधकरे त्रिषु ॥ २१६ ॥

( १ ) पुष्पभिच्छल्यद्रुफणिज्झके–ख. ।
( २ ) बटौ–ख. । ( ३ ) राधरङ्कः–ख. ।

शतानीकस्तु वृन्दे स्यान्मुनि(१)राजप्रभेदयोः ।
शालावृकः शृगाले स्यात् सारमेये वलीमुखे ॥ २१७ ॥
शिलाटकः पुमानट्टे (२)विलेपे परिकीर्तितः ।
शृगालिका शिवायां स्यात् त्रासादपि पलायने ॥ २१८ ॥
शृङ्गाटकं भवेद् वारिकण्टके च चतुष्पथे ।
सन्तानिकाऽपि क्षीरादिसारे मर्कटजालके ॥ २१९ ॥
सन्दंशिकाऽपि सुचुटीलोहयन्त्रविशेषयाः ।
सङ्घारिका तु युगले कुट्टनीघ्राणयोरपि ॥ २२० ॥
सङ्घाटिका स्त्रियां युग्मे कुट्टिन्यां जलकण्टके ।
सुप्रतीकः शोभनाङ्गे भवेदीशानदिग्गजे ॥ २२१ ॥
अथ सकतिकं मातृयात्रामङ्गलसूत्रके ।
ना संन्यस्ते क्षपणके त्रिषु सन्देहजीविनि ॥ २२२ ॥
सोमवल्कस्तु धवलखदिरे कट्फलेऽपि च ।
सौगन्धिकं तु कल्हारे पद्मरागेऽपि कत्तृणे ॥ २२३ ॥
पुंलिङ्गो गन्धपाषाणे सुगन्धिव्यवहारिणि ।

( कपञ्चकम् )

अनेडमूक उद्दिष्टः शठे वाक्श्रुतिवर्जिते ॥ २२४ ॥
स्यादाच्छुरितकं हासनखराघातभेदयोः ।
उपकारिकोपकर्त्र्यां पिष्टभेदे नृपालये ॥ २२५ ॥
कक्ष्यावेक्षक इत्येष शुद्धान्तोद्यानपालयोः ।
रङ्गाजीवे कणे(३) खड्गे द्वाःस्थेऽथ कटखादकः ॥ २२६ ॥
खादके काचकलशे बलिपुष्टे च जम्बुके ।
कृमिकण्टकं तु चित्राङ्गविडङ्गोदुम्बरेषु च ॥ २२७ ॥
गोजागरिकं मङ्गले पुंसि स्यात् कण्टकारके ।
चिलमीलिका तु कण्ठीभेदे खद्योतविद्युतोः ॥ २२८ ॥

---

( १ ) मणि–क. । ( २ ) विलेऽपि–ख. ।
( ३ ) कवौ–ख. ।

अथा जलकरङ्कः स्यान्नालिकेरफलेऽम्बुजे ।
शङ्खे जलतायां च वारिवाहे च कीर्त्तितः ॥ २२६ ॥
जलतापिक इल्लीश(१)काकचीझषयोश्च पुंसि स्यात् ।
नवफलिका स्त्री नव्ये नवजातरजोऽङ्गनायाश्च ॥ २३० ॥
नागवारिक उद्दिष्टो राजकुञ्जरहस्तिपे ।
गणस्थराजे गरुडे चित्रमेखलकेऽपि च ॥ २३१ ॥
स्याद् व्रीहिराजिकः कङ्गुधान्यचीनकधान्ययोः ॥
व्यवहारिका स्याल्लोकयात्रासम्मार्जनीङ्गुदे ॥ २३२ ॥
शतपर्विका दूर्वायां वचायामपि योषिति ।
शीतचम्पक इत्येष स्यादातर्पणदीपयोः ॥ २३३ ॥
सुवसन्तक उद्दि(२)ष्टो वासन्त्यां मदनोत्सवे ।
स्याद्धेमपुष्पिका यूथ्यां चम्पके हेमपुष्पकः ॥ २३४ ॥

( कषट्कम् )

ग्राममद्गुरिका ग्रामयुद्धे शृङ्गीझषे स्त्रियाम् ।
मदनशलाका कामोद्दीपकभैषज्यसारिकयोः ॥ २३५ ॥
मातुलपुत्रक इत्यपि मा(३)मकतनये फले च धूर्तस्य ।
वर्णविलोडक एष श्लोकस्तेने च सन्धिचौरे च ॥ २३६ ॥
सिन्दूरतिलक उक्तो मतङ्गजे स्त्री तु कामिन्याम् ।

## इति कान्तवर्गः ।

---

( खैकम् )

खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि ।
संवेदने देवलोके शर्मण्यपि नपुंसकम् ॥ १ ॥

( १ ) इलीशकाकोचिमत्स्ययोः-ख. ।
( २ ) आख्यातो-ख. । ( ३ ) मातुल-ख. ।

( खद्विकम् )

नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुन्नपुंसकम् ।
न्युङ्खः सम्यङ् मनोज्ञे च साम्नः षट्प्रणवेषु च ॥ २ ॥
प्रेङ्खा पर्यटनेऽप्यश्वगतौ संवेशनान्तरे ।
मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि ॥ ३ ॥
सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम् ।
लेखो लेख्ये सुरे लेखा लिपिराजिकयार्मता ॥ ४ ॥
रिङ्खाऽश्वगतिभेदेऽपि शूकशिम्ब्यां च नर्तने ।
शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे ॥ ५ ॥
शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयोः ।
शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके ॥ ६ ॥
चूडामात्रे शिखायां च ज्वालायां प्रपदेऽपि च ।
सखा मित्रे सहाये ना वयस्यायां सखी मता ॥ ७ ॥
सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः ।

( खत्रिकम् )

गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने ॥ ८ ॥
पुंसि मातलिपुत्रे च महादेवगणान्तरे ।
त्रिशिखो राक्षसे क्लीबं त्रिशूले मण्डलान्तरे ॥ ९ ॥
दुर्मुखः कपिभिन्नागभिदोर्ना मुखरे त्रिषु ।
प्रमुखः प्रथमे श्रेष्ठे मयूखः किरणेऽपि च ॥ १० ॥
ज्वालायामपि शोभायां विशिखस्तोमरे शरे ।
विशिखा तु खनित्र्यां च रथ्यानलिकयोरपि ॥ ११ ॥
विशाखस्तर्कके स्कन्दे स्त्रियामृक्षे कठिल्लके ।
वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तितः ॥ १२ ॥
सुमुखस्तार्क्ष्यतनयो शाकनागप्रभेदयोः ।

( खचतुष्कम् )

भवेदग्निमुखा देवे विप्रे भल्लातके स्त्रियाम् ॥ १३ ॥

अथाग्निशिखमुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च ।
लाङ्गलिक्याख्यौषधौ च विशल्यायां च योषिति ॥ १४ ॥
इन्दुलेखाऽमृतासोमलताशशिकलासु च ।
अथ बद्धशिखा स्त्री स्यादुच्चटायां शिशौ त्रिषु ॥ १५ ॥
महाशङ्खो मानुषास्थिसङ्ख्याभेदालिकेषु च ।
भवेद्व्याघ्रनखं कन्दगन्धद्रव्यविशेषयोः ॥ १६ ॥
नखक्षतान्तरे क्लीवं शिलीमुखोऽलिकाण्डयोः ।
शशिलेखा कलाभागे गुडूचीवृत्तभेदयोः ॥ १७ ॥
भवेत् स्वस्तिमुखो लेखे ब्राह्मणे वन्दिनि त्रिषु ।

( खपञ्चकम् )

मलिनमुखोऽग्नौ गोलाङ्गूले पुंसि त्रिषु क्रूरे ॥ १८ ॥
शीतमयूखश्चन्द्रे घनसारे चापि पुंलिङ्गः ।
सर्वतोमुख उग्रे च क्षेत्रज्ञब्रह्मणोः पुमान् ॥ १९ ॥
नपुंसकं तु पानीये सुरवर्त्मन्यपि स्मृतम् ।

## इति खान्तवर्गः ।

---

( गैकम् )

गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् ।
(१)स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च ॥ १ ॥

( गद्विकम् )

(२)अगः स्यान्नगवत् पृथ्वीधरपादपयोः पुमान् ।
अङ्गं गात्रे प्रतीकोपाययोः पुम्भूम्नि नीवृति ॥ २ ॥

---

( १ ) गायत्र्यामपि गम्भीरे जगत्यां भुवने जले । गो गणेशे च नाके च वियत्यपि पुमानयम् ॥ गः सुमेरौ समाख्यातो गायत्रीगीतयोः पुमान् । गन्धर्वे चापि गः ख्यातो गायके चाभिधेयवत् ॥ इति ख. पुस्तकेऽधिकम् ।

( २ ) अगो महीरुहे शैले भास्करे पवनाशने । ख. पु. पाठः ।

क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ।
इङ्गः स्याद्द्भुते ज्ञाने जङ्गमेङ्गितयोरपि ॥ ३ ॥
खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे ।
खडगो गण्डकश्टङ्गासिबुद्धभेदेषु गण्डके ॥ ४ ॥
गाङ्गस्तु गङ्गासम्भूते त्रिषु भीष्मे गुहे पुमान् ।
चङ्गस्तु शोभने दक्षे टङ्कोऽस्त्री स्यात् खनित्रके ॥ ५ ॥
खड्गभेदे च जङ्घायां त्यागो दाने च वर्जने ।
तुङ्गी निशाबर्बरयोः पुन्नागनगयोः पुमान् ॥ ६ ॥
उन्नते त्रिषु दुर्गोमानील्योः स्त्री दुर्गमे त्रिषु ।
नागं नपुसकं रङ्गे सीसके करणान्तरे ॥ ७ ॥
नागः पन्नगमातङ्गक्रूराचारिषु तोयदे ।
नागकेसरपुन्नागनागदन्तकमुस्तके ॥ ८ ॥
देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः ।
पिङ्गी गोरोचनाहिङ्गुनालिकाचण्डिकासु च ॥ ९ ॥
पिङ्गी शम्यां पिशङ्गे ना बालके तु नपुंसकम् ।
पूगस्तु क्रमुके वृन्दे फल(१)सारेऽभिधेयवत् ॥ १० ॥
नदीभेदे मलघ्वां स्त्री भङ्गो जयविपर्यये ।
भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम् ॥ ११ ॥
भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु ।
महात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ ॥ १२ ॥
भागो रूपार्द्धके भाग्यैकदेशयोर्भृगुः पुमान् ।
मुनौ हरे तटे शुक्रे भृङ्गो धूम्याटषिड्गयोः ॥ १३ ॥
मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि ।
भोगः सुखे धने चाहेः शरीरफणयोरपि ॥ १४ ॥
पालनेऽभ्यवहारे च योषिदादिभृतावपि ।
मार्गो मृगमदे मासप्रभेदेऽन्वेषणाध्वनोः ॥ १५ ॥

---

(१) फल्गु—ख. ।

मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः ।
अन्वेषणे च याच्ञायां मृगी तु वनितान्तरे ॥ १६ ॥
युगो रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु ।
युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च ॥ १७ ॥
योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु ।
वपुःस्थैर्ये प्रयोगे च विष्कम्भादिषु भेषजे ॥ १८ ॥
विश्रब्धघातके द्रव्योपायसन्नहनेष्वपि ।
कार्मणेऽपि च रङ्गो ना रागे नृत्ये रणक्षितौ ॥ १९ ॥
अस्त्री त्रपुणि रागस्तु मात्सर्ये लोहितादिषु ।
क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च ॥ २० ॥
रोगः कुष्ठौषधे व्याधौ लङ्गस्तु सङ्गषिड्गयाः ।
लिङ्गं चिन्हेऽनुमाने च साङ्ख्योक्तप्रकृतावपि ॥ २१ ॥
शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुंसकम् ।
व्यङ्गो भेके च हीनाङ्गे वङ्गं सीसकरङ्गयाः ॥ २२ ॥
वार्त्ताकेऽपि च कार्पासे पुम्भूम्नि नीवृदन्तरे ।
वल्गुः स्याच्छगले पुंसि सुन्दरे चाभिधेयवत् ॥ २३ ॥
वेगो जवे प्रवाहे च महाकालफलेऽपि च ।
शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने ॥ २४ ॥
शुङ्गो वटाम्रातकयोः पर्कट्यामपि चास्त्रियाम् ।
शृङ्गं प्रभुत्वे शिखरे चिन्हे क्रीडाम्बुयन्त्रके ॥ २५ ॥
विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात् कूर्चशीर्षके ।
स्त्री विषायां स्वर्णमीनभेदयो ऋषभौषधौ ॥ २६ ॥
स र्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु ।

( गत्रिकम् )

अयागो विधुरे कूटे विश्लेषे कठिनोद्यमे ॥ २७ ॥
अनङ्गे मदनेऽनङ्गमाकाशमनसोरपि ।
अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च ॥ २८ ॥
आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि ।

आयोगो व्यापृतौ गन्धमाल्योपहाररोधयोः ॥ २६ ॥
आशुगो मारुते बाणेऽप्युद्वेगं क्रमुकीफले ।
उद्वेगोऽप्युद्वाहुलकोद्वेजनोद्गमनेषु च ॥ ३० ॥
उत्सर्गः पुंसि सामान्ये न्याये च त्यागदानयोः ।
कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति ॥ ३१ ॥
न द्वयोः कौटजफले महिलायां तु योषिति ।
कालिङ्गो भूमिकर्कारौ दन्तावलभुजङ्गयोः ॥ ३२ ॥
कालिङ्गी राजकर्कट्यां चक्राङ्गो मानसौकसि ।
चक्राङ्गी कटुरोहिण्यां जिह्मगोऽहौ च मन्दगे ॥ ३३ ॥
तडागोऽस्त्री जलाधारविशेषे यन्त्रकूटके ।
तातगुः क्षुद्रताते ना जनकस्य हिते त्रिषु ॥ ३४ ॥
त्रिवर्गो धर्मकामार्थे त्रिफलायां कटुत्रिके ।
वृद्धिस्थानक्षये सत्त्वरजस्तमसि चेष्यते ॥ ३५ ॥
तुरगी चाश्वगन्धायां तुरगश्चित्तवाजिनोः ।
धाराङ्गोऽसौ च तीर्थे च नरङ्गस्तु वरण्डके ॥ ३६ ॥
मेहने न द्वयोश्चाथ नारङ्गः पिप्पलीरसे ।
यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च ॥ ३७ ॥
निषङ्गः सङ्गते तूणे निसर्गो रूपसर्गयोः ।
नीलङ्गुः स्यात्क्रमौ पुंसि भम्भराल्यां तु योषिति ॥ ३८ ॥
पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने ।
पन्नगश्चौषधीभेदे तथैव पवनाशने ॥ ३९ ॥
प्लवगो वानरे भेके सारथौ चोष्णदीधितेः ।
परागः सुमनोरेणौ धूलिस्नानीययोरपि ॥ ४० ॥
गिरिप्रभेदे विख्यातावुपरागे च चन्दने ।
प्रयागस्तीर्थभेदे स्याद्यज्ञे शतमखाश्वयोः ॥ ४१ ॥
प्रयोगः कार्मणेऽपि स्यात् प्रयुक्तौ च निदर्शने ।
पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः ॥ ४२ ॥
क्लीबं सूते प्रियङ्गुः स्त्री राजिकाकणयोरपि ।

फलिन्यां कङ्गुसस्ये च पुन्नागस्तु सितोत्पले ॥ ४३ ॥
जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे ।
वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि ॥ ४४ ॥
भुजङ्गोऽहौ च षिड्गे च मातङ्गः श्वपचे गजे ।
मृदङ्गः पटहे घोषे रक्ताङ्गस्तु महीसुते ॥ ४५ ॥
कम्पिल्ले स्त्री तु जीवन्त्यां क्लीबं विद्रुमधीरयोः ।
रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहङ्गमे ॥ ४६ ॥
वातिगः पुंसि भण्टाक्यां धातुवादिनि चान्यवत् ।
विडङ्गस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुन्नपुंसकम् ॥ ४७ ॥
विसर्गस्तु पुमान् दाने त्यागे च मलनिर्गमे ।
विसर्जनीयेऽप्ययनभेदेऽपि च विभावसोः ॥ ४८ ॥
विहङ्गस्तु त्रिलिङ्गः स्यादाशुगे च विहङ्गमे ।
सर्वगं सलिले क्लीबं सर्वगः शङ्करे विभौ ॥ ४९ ॥
सम्भागस्तु पुमान् भोगे सुरते जिनशासने ।
सारङ्गः पुंसि हरिणे चातके च मतङ्गजे ॥ ५० ॥
शबले त्रिषु हेमाङ्गो गरुडे परमेष्ठिनि ।

( गचतुष्कम् )

स्यादपवर्गस्त्यागे मोक्षे कार्यावसानसाफल्ये ॥ ५१ ॥
अभिषङ्गः पुंलिङ्गः पराभवाक्रोशशपथेषु ।
ईहामृगस्तु पुंसि स्यात् कोकरूपकभेदयोः ॥ ५२ ॥
उपरागस्तु पुंसि स्याद्राहु(१)ग्रस्तार्कचन्द्रयोः ।
दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते ॥ ५३ ॥
उपसर्गः पुमान् रोगभेदोपप्लवयोरपि ।
कटभङ्गस्तु शस्यानां हस्तच्छेदे नृपात्यये ॥ ५४ ॥
छत्रभङ्गोऽपि वैधव्ये स्वातन्त्र्यनृपनाशयोः ।
दीर्घाध्वगः पुमानुष्ट्रे लेख्यहारे तु भेद्यवत् ॥ ५५ ॥

---

( १ ) राहुग्रासेऽर्कचन्द्रयोः—ख. ।

मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि ।
समायोगस्तु संयोगे समवाये प्रयोजने ॥ ५६ ॥
सम्प्रयोगो रतेऽपि स्यादन्वितौ कार्मणेऽपि च ।
( गपञ्चकम् )
कथाप्रसङ्गो वातूले विषवैद्ये च वाच्यवत् ॥ ५७ ॥
नाडीतरङ्गः काकोले हिण्डके रतहिण्डके ।

## इति गान्तवर्गः ।

---

( घैकम् )
घो घण्टायां घर्घरे ना स्त्रियां तु काञ्चिघातयोः ।
( घद्विकम् )
अघं तु व्यसने दुःखे दुरिते च नपुंसकम् ॥ १ ॥
अर्घः पूजाविधौ मूल्येऽप्युद्धः स्याद्देहजानिले ।
अग्नौ हस्तपुटे शस्तेऽप्योघो वेगे जलस्य च ॥ २ ॥
वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः ।
मघा मघी च नक्षत्रे धान्यभेदे यथाक्रमम् ॥ ३ ॥
मघो द्वीपान्तरे मेघो मुस्ताजलदयोः पुमान् ।
मोघा स्त्री पाटलायां स्याद्धीननिष्फलयोस्त्रिषु ॥ ४ ॥
लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् ।
शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ तु स्त्री ॥ ५ ॥
श्लाघा स्त्रियां प्रशंसायां परिचर्याऽभिलाषयोः ।
( घत्रिकम् )
अनघो निर्मलापापमनोज्ञेष्वभिधेयवत् ॥ ६ ॥
अमोघः सफले वाच्यवत् स्त्री पथ्याविडङ्गयोः ।
उल्लाघोऽपि शुचौ कृष्णे दक्षनीरोगयोस्त्रिषु ॥ ७ ॥
काचिघः काञ्चनेऽपि स्याच्छ्लेमण्डे मूषकेऽपि च ।
निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि ॥ ८ ॥
पलिघः काचकलशे घटे प्राकारगोपुरे ।

परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः ॥ ९ ॥
प्रतिघः प्रतिघाते स्यात क्रोधेऽपि परिकीर्त्तितः ।
महार्घस्तु महामूल्ये त्रिपु स्याल्लावके पुमान् ॥ १० ॥
सर्वौघो गुरुभेदे च सर्वसन्नहने पुमान् ।

## इति घान्तवर्गः ।

( ङैकम् )

ङः पुमान् विषये ख्यातः स्पृहायां विषयस्य च ।

## इति ङान्तवर्गः ।

( चैकम् )

चश्चण्डेशे पुमानुक्तः कच्छपे चन्द्रचौरयोः ।

( चद्विकम् )

अर्चा पूजाप्रतिमयोः कचः केशे गुरोः सुते ॥ १ ॥
बन्धे शुष्कव्रणे पुंसि करिण्यां तु कचा स्त्रियाम् ।
काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे ॥ २ ॥
काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च ।
कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे ॥ ३ ॥
क्रौञ्चो द्वीपविशेषे स्यात् पक्षिपर्वतभेदयोः ।
चर्चा चिन्तास्थासकयोश्चर्चिकायां तु योषिति ॥ ४ ॥
चञ्चा तु नलनिर्माणे तृणनिर्मितपूरुषे ।
चञ्चुस्त्रोष्ठ्यां स्त्रियां पुंसि गोनाडीके व्यडम्बके ॥ ५ ॥
त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः ।
न्यङ् नीचनि(१)म्नयोर्नीचः पामरे वामनेऽपि च ॥ ६ ॥
प्राच्छब्दो दिशि देशे च काले च वाच्यलिङ्गकः ।
पिचुर्ना कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे ॥ ७ ॥
मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः ।

---

( १ ) मन्दयो–ख. ।

रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः ॥ ८ ॥
रुक् स्त्री शोभाद्युतीच्छासु वचः कीरे वचौषधौ ।
शारिकायां च वाग्वाचे भारत्यां वचने स्त्रियौ ॥ ९ ॥
वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयोः ।
शचीन्द्राण्यां शतावर्यां तथा स्त्रीकरणान्तरे ॥ १० ॥
शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि ।
ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु ॥ ११ ॥
सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे ।

( चत्रिकम् )

उदग्दिग्देशकालेषु वाच्यवत् त्रितयेऽव्ययम् ॥ १२ ॥
कणीची पुष्पितलतागुञ्जयोः शकटे स्त्रियाम् ।
कवचो गर्दभाण्डे च सन्नाहे पटहेऽपि च ॥ १३ ॥
क्रकचः करपत्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान् ।
नमुचिस्तु पुमान् दैत्यभेदे कुसुमकार्मुके ॥ १४ ॥
नाराच्येषणिकायां ना लोहबाणाम्बुहस्तिनोः ।
प्रपञ्चः सञ्चयेऽपि स्याद्विस्तारे च प्रतारणे ॥ १५ ॥
प्रत्यग्दिग्देशकालेषु वाच्यवत्त्रितयेऽव्ययम् ।
मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम् ॥ १६ ॥
मारीचो रक्षसो भेदे कक्कोले याजकद्विजे ।
मारीची देवताभेदे विपञ्ची केलिवीणयोः ॥ १७ ॥
विकचः क्षपणे केतौ नाऽकेशे स्फुटितेऽन्यवत् ।
विरञ्चिर्ना विरिञ्चश्च वैकुण्ठे परमेष्ठिनि ॥ १८ ॥
सङ्कोचो मीनभेदे स्याद् बन्धे क्लीबं तु कुङ्कुमे ।
सम्यक् स्याद्वाच्यलिङ्गं तु मनोज्ञे सङ्गतेऽपि च ॥ १९ ॥

( चचतुष्कम् )

जलसूचिः कङ्कत्राटिमत्स्यशृङ्गाटयोरपि ।
शिशुमारे च पुंलिङ्गो जलौकायां तु योषति ॥ २० ॥
मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान् ।

( चपञ्चकम् )

रतनारीचो नारीणां सीत्कारे च शुनि स्मरे ॥ २१ ॥

## इति चान्तवर्गः ।

---

( छैकम् )

छा(१) छादने स्त्रियां ख्याता निर्मलेऽन्यवदिष्यते ।

( छद्विकम् )

अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् ॥ १ ॥
आभिमुख्येऽथ कच्छः स्यादनूपे तुन्नकद्रुमे ।
नौकाङ्गे पुंसि वाराह्यां चीरिकायां च योषिति ॥ २ ॥
स्याद् गुच्छः स्तबके स्तम्बे हारभेदकलापयोः ।
पिच्छा पूगच्छटाकोशमोचाशाल्मलिवेष्टके ॥ ३ ॥
भक्तसम्भूतमण्डे च पङ्क्तावश्वपदामये ।
स्त्रियां पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः ॥ ४ ॥
पुच्छः पश्चात्प्रदेशे स्याल्लाङ्गूले पुच्छमिष्यते ।
म्लेच्छः पामरभेदे च पापरक्तेऽपभाषणे ॥ ५ ॥

( छचतुष्कम् )

महाकच्छस्तु पुंसि स्यात् समुद्रं च प्रचेतसि ।

## इति छान्तवर्गः ।

---

( जैकम् )

जा ना मृत्युञ्जये जन्यां तातमात्रे जनार्दने ।
(२)जूस्त्वरागमने प्रोक्ता सामान्यगमने स्त्रियाम् ॥ १ ॥
जूराकाशसरस्वत्यां पिशाच्यां जवने स्त्रियाम् ।

( जद्विकम् )

अजश्छागे हरिब्रह्मविधुस्मरहरे नृपे ॥ २ ॥

---

( १ ) तरले छं प्रकीर्तितं माहात्म्ये परमेऽपि च–ख. पुस्तकेऽधिकम् ।
( २ ) त्वरिते जः समाख्यातो जयने जिः प्रकीर्तितः–ख. पुस्तकेऽधिकम् ।

अब्जोऽस्त्री शङ्खे ना विचुले धन्वन्तरौ च हिमकिरणे ।
क्लीबं पद्मेऽथाजिः स्त्री समभूमौ च संग्रामे ॥ ३ ॥
ऊर्ज्जस्तु कार्त्तिकोत्साहबलेषु प्राणनेऽपि च ।
कञ्जः केशे विरिञ्चे च कञ्जं पीयूषपद्मयोः ॥ ४ ॥
कुजा कात्यायनीदेव्यां कुजो रनकभौमयोः ।
कुब्जो वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गकः ॥ ५ ॥
कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि हस्तिनाम् ।
खञ्जा छन्दःप्रभेदे स्त्री कुटिलाङ्घ्रौ तु वाच्यवत् ॥ ६ ॥
खजा मन्थे प्रहस्तेऽथ खर्जूः कीटान्तरे स्मृता ।
खर्जूरापादपे कण्डूवां गजो माने मतङ्गजे ॥ ७ ॥
वास्तुनः स्थानभेदेऽपि गञ्जा खनौ सुरागृहे ।
गञ्जः स्यात् पुंसि रौढायां भाण्डागारे तु न स्त्रियाम् ॥ ८ ॥
गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ ।
द्विजः स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना ॥ ९ ॥
द्विजा भार्ग्यां हरेणौ च ध्वजः स्याच्छौण्डिके पुमान् ।
न स्त्रियां तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः ॥ १० ॥
निजं स्वीये च नित्ये च न्युब्जो दर्भमयस्रुचि ।
कर्मरङ्गफले क्लीबं कुब्जाधोमुखयोस्त्रिषु ॥ ११ ॥
प्रजा लोके च सन्ताने पिञ्जा तूलहरिद्रयोः ।
बले क्लीबे वधे पुंसि व्याकुले त्रिष्वथा भुजा ॥ १२ ॥
द्वयोर्बाहौ करे मर्जूः स्त्री शुद्धौ धावकेऽपि च ।
रजो रेणौ परागे स्यादार्तवे च गुणान्तरे ॥ १३ ॥
रज्जुर्वेण्यां गुणे योषिद्राजिः स्त्री पङ्क्तिलेखयोः ।
रुजा रागे च भङ्गेऽथ लाजः स्यादार्द्रतण्डुले ॥ १४ ॥
नपुंसकमुशीरे च स्त्रियां पुम्भूम्नि चाक्षते ।
व्रजो गोष्ठाध्ववृन्देषु वाजो निःस्वनपक्षयोः ॥ १५ ॥
वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु ।
व्याजः शाठ्येऽपदेशेऽथ बीजमङ्कुरकारणे ॥ १६ ॥

हेतुतत्त्वाधानशुक्रे सर्जूर्वणिजि विद्युति ।
स्त्रियां स्वज्ञो विधौ रुद्रे स्वजः प्रस्वेदपुत्रयोः ॥ १७ ॥
क्लीबं रक्तेऽथ सज्जः स्यात् सन्नद्धे सम्भृते त्रिषु ।

( जत्रिकम् )

अण्डजो मृगनाभौ स्यात् सरटेऽह्नौ खगे झषे ॥ १८ ॥
अङ्गजं रुधिरेऽनङ्गकेशपुत्रगदेषु ना ।
अम्बुजो निचुले पुंसि कमले तु नपुंसकम् ॥ १९ ॥
असृक् स्याद्योगभेदे ना रक्तेऽपि स्यान्नपुंसकम् ।
कम्बोजो हस्तिभेदेऽपि शङ्खदेशविशेषयोः ॥ २० ॥
करजं स्याद्व्याघ्रनखे करञ्जनखयोः पुमान् ।
कारुजः शिल्पिनां चित्रे वामलूरे गजार्भके ॥ २१ ॥
काम्बोजोऽश्वान्तरे सोमवल्के पुन्नागपादपे ।
काम्बोजी माषपर्ण्यां च वलक्षखदिरे स्त्रियाम् ॥ २२ ॥
कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि ।
गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शलजे ॥ २३ ॥
लोहेऽपि गिरिजागौरीमातुलुङ्गयोश्च योषिति ।
जलजं कमले शङ्खे नीरजं कुष्ठपद्मयोः ॥ २४ ॥
परञ्जस्तैलयन्त्रे स्याच्छुरिकाफलसेनयोः ।
वलजं गोपुरे क्षेत्रे शस्यसङ्गरयोरपि ॥ २५ ॥
वलजा वरयोषायां यूथ्यामथ वणिक् स्त्रियाम् ।
वणिज्यायां पुमान् वाणिज्यके च करणान्तरे ॥ २६ ॥
बाहुजः क्षत्रिये कीरे स्वयञ्जाततिलेऽपि च ।
भूमिजो नरकेऽङ्गारे सीतादेव्यां तु भूमिजा ॥ २७ ॥
वनजा मुद्गपर्ण्यां ना मुस्तके क्लीबमम्बुजे ।
सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत् ॥ २८ ॥
समजः पशुवृन्दे ना विपिने तु नपुंसकम् ।
सामजस्तु गजे पुंसि सामोत्थे पुनरन्यवत् ॥ २९ ॥
हिमजा तु शचीगौर्योः पुंसि मैनाकपर्वते ।

( जचतुष्कम् )

अहिभुग् बर्हिणे तार्क्ष्ये पुंसि काश्मीरजं पुनः ॥ ३० ॥
कुष्ठकुङ्कुमयोः क्लीबेऽतिविषायां तु योषिति ।
क्षीराब्धिजं तु सामुद्रलवणे मौक्तिकेऽपि च ॥ ३१ ॥
पुमांस्तुषारकिरणे कमलायां तु योषिति ।
ग्रहराजो रवौ चन्द्रे जघन्यजः कनीयसि ॥ ३२ ॥
वृषले द्विजराजस्तु चन्द्रेऽनन्ते गरुत्मति ।
धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान् ॥ ३३ ॥
भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे ।
भारद्वाजी वनकार्पास्यां ना द्रोणऋषिभेदयोः ॥ ३४ ॥
अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे ।
यक्षराट् पुंसि धनदे मल्लानां रङ्गचत्वरे ॥ ३५ ॥
राजराजः कुबेरेऽपि सार्वभौमे सुधाकरे ।

( जपञ्चकम् )

ऋषभध्वज एषोऽपि शङ्करे चार्हदन्तरे ॥ ३६ ॥
(१)मुनिभेषजमागस्त्यहरीतक्यां च लङ्घने ।

इति जान्तवर्गः ।

---

( झैकम् )

झो झण्टीशे सुरगुरौ दैत्यराजे ध्वनावपि ।

( झद्विकम् )

झञ्झा वाते तारवायौ नष्टेऽपि कीर्त्यते बुधैः ॥ १ ॥
झञ्झा ध्वनिविशेषे च स्यादम्बुकणवर्षणे ।

इति झान्तवर्गः ।

---

( ञैकम् )

ञः पुमान् स्याद् बलीवर्दे शुके वाममतावपि ।

---

( १ ) वसुन्धरीशजश्चन्द्रे पद्मेऽपि परिकीर्तितः—ख. पुस्तकेऽधिकम् ।

( ज्ञद्विकम् )

ज्ञो ब्रह्मबुधविद्वत्सु स्यादज्ञो जडमूर्खयोः ॥ १ ॥
प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ च योषिति ।
राज्ञी राजप्रियायां च भार्यायां भास्करस्य च ॥ २ ॥
संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः ।
अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति ॥ ३ ॥

( ज्ञत्रिकम् )

कृतज्ञः कुक्कुरे पुंसि मर्यादिन्यभिधेयवत् ।
क्षेत्रज्ञ आत्मनि च्छेके दैवज्ञो गणके पुमान् ॥ ४ ॥
दैवज्ञेक्षणिकायां स्त्री सर्वज्ञः शिवबुद्धयोः ।

इति ञान्तवर्गः ।

---

( टैकम् )

(१)टः पुमान् वामने पादे निःस्वनेऽपि क्वचिन्मतः ।

( टद्विकम् )

अट्टं भक्ते च शुष्के ना क्षौमेऽत्यर्थे गृहान्तरे ॥ १ ॥
इष्टमाशंसितेऽपि स्यात् पूजिते प्रेयसि त्रिषु ।
सप्ततन्तौ पुमान् क्लीबे संस्कारे ऋतुकर्मणि ॥ २ ॥
इष्टिर्मताऽभिलाषेऽपि सङ्ग्रहश्लोकयागयोः ।
कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शिवे(२) ॥ ३ ॥
समये गजगण्डे च पिप्पल्यां तु कटी मता ।
कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि ॥ ४ ॥
नपुंसकमकार्ये स्यात् पुंलिङ्गो रसमात्रके ।
त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च ॥ ५ ॥

---

( १ ) टा पृथिव्यां करङ्के टी ध्वनौ च परिकीर्तितः । टो महेश्वर आख्यातः ख्याते त्रिभुवनेऽपि च ॥ इदं पद्यं ख.पुस्तकेऽधिकम् ।

( २ ) शरे–ख., शिरे–क. ।

कष्टं तु गहने कृच्छ्रे क्रुष्टं रोदनरावयोः ।
कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे ॥ ६ ॥
कुटी स्यात् कुम्भदास्यां च मुरायां चित्रगुच्छके ।
कूटाऽस्त्री निश्चलं राशौ लौहमुद्गरदम्भयोः ॥ ७ ॥
मायाद्रिशृङ्गयोस्तुच्छे सीरावयवयन्त्रयोः ।
अनृते चाथ कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान् ॥ ८ ॥
कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः ।
खटोऽन्धकूपकफयोः प्रहारान्तरटङ्कयोः ॥ ९ ॥
खाटिस्त्वसद्ग्रहेऽपि स्यात् किणे शवरथे स्त्रियाम् ।
खेटः कफे ग्रामभेदे चर्मण्यस्त्र्यधर्मिति त्रिषु ॥ १० ॥
अथ गृष्टिः सकृत्सूतगवीबदरयोः स्त्रियाम् ।
घटः समाधिभेदेभशिरःकूटकुटेषु च ॥ ११ ॥
घटा घटनगोष्ठीभघटनासु च योषिति ।
घृष्टिः स्त्री घर्षणस्पर्द्धाविष्णुक्रान्तासु ना किरौ ॥ १२ ॥
घोण्टा तु बदरीपूगवृक्षयोरपि योषिति ।
चटुश्चाटौ पिचिण्डे(१) च व्रतिनामासने पुमान् ॥ १३ ॥
जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी ।
जुष्टं तु क्लीबमुच्छिष्टे सेविते वाच्यलिङ्गकम् ॥ १४ ॥
झाटो निकुञ्जे कान्तारे व्रणादीनां च मार्जने ।
तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु ॥ १५ ॥
त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि ।
त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः ॥ १६ ॥
त्रोटिः स्त्री कट्फले चञ्च्वां खगे मीनान्तरेऽपि च ।
दिष्टं दैवे पुमान् काले दिष्टिर्मुत्परिमाणयोः ॥ १७ ॥
स्त्रियां, दृष्टिः स्त्रियां बुद्धौ लोचने दर्शनेऽपि च ।
धटो दिव्यतुलायां स्याद्धटी चीरे च वाससः ॥ १८ ॥
नटी नल्यौषधे स्त्री स्यात् शैलूषाशोकयोः पुमान् ।

(१) ऽथ-ख. ।

पटश्चित्रपटे वस्त्रेऽस्त्री प्रियालद्रुमे पुमान् ॥ १६ ॥
पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् ।
पटोले तु पुमान् क्लीबे छत्रालवणयोरपि ॥ २० ॥
पट्टः पेषणपाषाणे व्रणादीनां च बन्धने ।
चतुष्पथे च राजादिशासनान्तरपीठयोः ॥ २१ ॥
पटिः स्त्री पटभेदे स्याद्वागुलौ कुम्भिकाद्रुमे ।
पुष्टिः स्त्री पोषणे वृद्धौ फटा तु फणदन्तयोः ॥ २२ ॥
बटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः ।
भटः स्यात् पुंसि वीरे च विशेषे पामरस्य च ॥ २३ ॥
भृष्टिः स्याद्भर्जने शून्यवाटिकायां च योषिति ।
म्लिष्टं त्रिष्वव्यक्तवाचि म्लाने मुष्टिर्द्वयोः फले ॥ २४ ॥
बद्धपाणौ त्सरौ यष्टिः पुंसि स्याद् भुजदण्डके ।
द्वयाहारलताभार्ग्योर्मधुकाशस्त्रभेदयोः ॥ २५ ॥
रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले ।
रिष्टिः खड्गे ना शुभे स्त्री लाटो देशान्तरेऽशुके ॥ २६ ॥
वाटो मार्गे वृतिस्थाने स्यात् कुटीवास्तुनोः स्त्रियाम् ।
विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च ॥ २७ ॥
विष्टिस्त्रिषु कर्मकरे स्त्रथाजूवेतनकर्मसु ।
व्युष्टिः फले समृद्धौ स्त्री व्युष्टं कल्ये त्रिषूषिते ॥ २८ ॥
सटा जटाकेसरयोः स्फुटो व्यक्तप्रफुल्लयोः ।
व्याप्ते त्रिषु स्फुटिर्योषित् पादस्फोटामयेऽपि च ॥ २९ ॥
निर्भिन्नकर्कटीशस्येऽपि स्यात् सृष्टं तु निर्मिते ।
युक्तनिश्चितयोः प्राज्ये त्रिषु सृष्टिस्तु निर्मितौ ॥ ३० ॥
स्वभावे चापि कथिता हृष्टो रोमाञ्चितेऽपि च ।
जातहर्षे प्रहसिते विस्मितेऽप्यभिधेयवत् ॥ ३१ ॥

( टत्रिकम् )

अवटः स्यात् खिले गर्ते कूपे कुहकजीविनि ।
अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः ॥ ३२ ॥

अरिष्टमशुभे तक्रे सूतिकागार आसवे ।
शुभे मरणचिन्हे चारिष्टमादेशिते त्रिषु ॥ ३३ ॥
भाङ्गतोच्छ्रिष्टयोः क्लीबमुत्कटस्तीव्रमत्तयोः ।
उद्भटः कच्छपे(१)शूर्पे कर्कटो विहगान्तरे ॥ ३४ ॥
राशिभेदे कुलीरे च वालुङ्क्यां शाल्मलीफले ।
कर्दटः करहाटे स्यात् पङ्कपङ्कारयोरपि ॥ ३५ ॥
करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीवने(२) ।
एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे ॥ ३६ ॥
करटो वाद्यभेदेऽथ कार्पटो जतुकार्थिणोः ।
कीकटः कृपणे निःस्वे त्रिषु पुम्भूम्नि नीवृति ॥ ३७ ॥
कुरण्टो दारुपुत्र्यां ना झिण्ट्यम्लानप्रभेदयोः ।
कुक्कुटव्यनृतचर्यायां पुंसि स्याच्चरणायुधे ॥ ३८ ॥
निषादशूद्रयोः पुत्रे तृणोल्कायां च कुक्कुभे ।
कुनटी मनःशिलायां नैपाल्यामपि योषिति ॥ ३९ ॥
कूर्पासमुदरे तोये केशटो हर्यजोत्कटे ।
चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च ॥ ४० ॥
चक्राटो विषवैद्येऽपि धूर्तदीनारयोरपि ।
चिपिटः खाद्यभेदे ना त्रिषु पिट्टितविस्तृते ॥ ४१ ॥
चिरटी तु सुवासिन्यां स्याद् द्वितीयवयःस्त्रियाम् ।
जकुटं वार्त्ताकुपुष्पे जकुटो मलये शुनि ॥ ४२ ॥
त्र्यङ्कटं शिक्यभेदेऽपि धौताञ्जन्यां च न द्वयोः ।
त्रिकूटं सिन्धुलवणे त्रिकूटः पर्वतान्तरे ॥ ४३ ॥
त्रिपुटा मल्लिकायां च सूक्ष्मैलात्रिवृतोः स्त्रियाम् ।
सतीनके च तीरे च त्रिपुटः समुदाहृतः ॥ ४४ ॥
द्रोहाटः कथितो गाथाप्रभेदे मृगलुब्धके ।
वैडालव्रतिके चाऽथ धाराटश्चातकाश्वयोः ॥ ४५ ॥

---

( १ ) सूर्ये-ख. । ( २ ) जीविनि-ख. ।

निर्दटस्तु दयाशून्ये कथितो निष्प्रयोजने ।
परापवादरक्ते च वाच्यलिङ्गोऽयमिष्यते ॥ ४६ ॥
निष्कुटस्तु गृहोद्याने स्यात् केदारकपाटयोः ।
पर्कटी नूतनफले पूगादेः प्लक्षपादपे ॥ ४७ ॥
परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम् ।
पर्पटी पिष्टभेदे स्यात् पर्पटो भेषजान्तरे ॥ ४८ ॥
पात्रटः (१)कर्परे पुंसि कृशे स्यादभिधेयवत् ।
पिच्चटो नेत्ररोगे स्यात् क्लीबं सीसकरङ्गयाः ॥ ४९ ॥
वरटा द्वयोर्वरट्यां स्त्री हंस्यां तत्पतौ पुमान् ।
बर्वटी पण्ययोषायां व्रीहिभेदे च योषिति ॥ ५० ॥
वेकटः स्याद्वैकटिके मत्स्यभेदे च यूनि च ।
भावाटो भावके साधुनिवेशे कामुके नटे ॥ ५१ ॥
भाकूटः शैलझषयोर्भेदे स्यादथ मर्कटी ।
करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः ॥ ५२ ॥
मोचाटः कृष्णजीरे च रम्भास्थिन मलयोद्भवे ।
मोरटं तु भवेदिक्षुमूलाङ्कोठप्रसूनयोः ॥ ५३ ॥
सप्तरात्रात्परक्षीरे मूर्विकायां तु मोरटा ।
वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने ॥ ५४ ॥
चिकटा वज्रवाराह्यां त्रिषूरुविकरालयोः ।
शाकटं शकटस्येदमित्यर्थे तस्य वोढरि ॥ ५५ ॥
शैलाटो देवले सिंहे शुक्लकाचकिरातयोः ।
संसृष्टं त्रिषु संसर्गे संशुद्धे वसनादिना ॥ ५६ ॥

(टचतुष्कम्)

उच्चिङ्गटस्तृणगडमत्स्ये(२) कोपनपूरुषे ।
करहाटः शिफाकन्दे पद्मस्य मदनद्रुमे ॥ ५७ ॥
स्यात् कार्पटः कृपणोन्मत्तानर्थकरेषु च ।

(१) कर्पटे-ख. । (२) मत्स्यकोपनयोः पुमान्-ख. ।

कामकूटस्तु वेश्यायाः प्रियविभ्रमयोः पुमान् ॥ ५८ ॥
कुटन्नटं तु कैवर्तं मुस्तके पुंसि शोणके ।
कुण्डकीटस्तु चार्वाकवचनाभिज्ञपूरुषे ॥ ५९ ॥
पतितब्राह्मणीपुत्रदासीकामुकयोरपि ।
खड्गारीटस्तु फलकासिधाराव्रतधारिणोः ॥ ६० ॥
गाढमुष्टिः कृपाणे ना कृपणे त्वभिधेयवत् ।
चक्रवाटः क्रियारोहे पर्य्यन्ते च शिखातरौ ॥ ६१ ॥
चतुःषष्टिः कलासंख्याभेदयोर्बह्वृचि स्त्रियाम् ।
नारकीटोऽश्मकीटे स्यात् स्वदत्ताशाविहन्तरि ॥ ६२ ॥
परपुष्टः परभृते वारनार्यां तु योषिति ।
प्रतिकृष्टं मतं गुह्ये द्विरावृत्त्या च कर्षिते ॥ ६३ ॥
प्रतिसृष्टः प्रेषिते स्यात् प्रत्याख्याते च वाच्यवत् ।
वर्करोटः कटाक्षे स्यात्तरुणादित्यरोचिषि ॥ ६४ ॥
नारीपयोधरोत्सङ्गकान्तदत्तनखक्षते ।
शिपिविष्टस्तु खलतौ शिवे दुश्चर्मणि स्मृतः ॥ ६५ ॥
अथ श्रुतिकटः प्राश्चल्लोहेऽहौ पापशोधने ।

( टपञ्चकम् )

दशनोच्छिष्टः पुंसि स्यान्निश्वासाधरचुम्बयोः ॥ ६६ ॥

## इति टान्तवर्गः ।

---

( ठैकम् )

ठो मण्डले चन्द्रबिम्बे शून्ये च लोकगोचरे ।

( ठद्विकम् )

कठो मुनौ तदाख्यातवेदाध्येतृज्ञयोः स्वरे ॥ १ ॥
कण्ठो गले सन्निधाने ध्वनौ मदनपादपे ।
काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः ॥ २ ॥

स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम् ।
कुष्ठं रोगे पुष्करेऽस्त्री कुण्ठोऽकर्मण्यमूर्खयोः ॥ ३ ॥
कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च ।
गोष्ठं गोस्थानके गोष्ठी सभासंलापयोः स्त्रियाम् ॥ ४ ॥
ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासान्तरे पुमान् ।
ज्येष्ठा तु गृहगोधाऽऽख्यजन्तुनक्षत्रभेदयोः ॥ ५ ॥
निष्ठा निष्पत्तिनाशान्तयाञ्चानिवहणेषु च ।
प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ ॥ ६ ॥
पाठश्च पठने ख्याते विद्धकर्ण्यां तु योषिति ।
पृष्ठं परमगात्रेऽपि देहस्यावयवान्तरे ॥ ७ ॥
वण्ठः स्यादकृतोद्वाहे खर्वे कुन्तायुधेऽपि च ।
शठो मध्यस्थपुरुषे धूर्त्तधूस्तूरयोरपि ॥ ८ ॥
श्रेष्ठो वरे कुबेरे च शोठो मूर्खेऽलसेऽपि च ।
षष्ठी कात्यायनीतिथ्योस्त्रिषु षण्णां च पूरणे ॥ ९ ॥
हठः स्यात् प्रसभे पृश्न्यां हठो बाधापिहेठयोः ।

( ठत्रिकम् )

अपष्ठुः पुंसि काले च वामे स्यादन्यलिङ्गकः ॥ १० ॥
अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च ।
अम्बष्ठा चाम्ललोण्यां स्यात् पाठायूथिकयोरपि ॥ ११ ॥
कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम् ।
कनिष्ठोऽतियुवात्यल्पानुजे स्त्री दुबलाङ्गुलौ ॥ १२ ॥
जरठः कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत् ।
नर्मठश्चिबुके षिङ्गे प्रतिष्ठागौरवे क्षितौ ॥ १३ ॥
स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः ।
प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च ॥ १४ ॥
भूपकक्षान्तरेऽपि स्याद्वरिष्ठं मरिचेऽपि च ।
ताम्रे क्लीबं तित्तिरौ ना वरोरुतमयोस्त्रिषु ॥ १५ ॥
मकुष्ठो व्रीहिभेदे ना मन्थरे पुनरन्यवत् ।

लघिष्ठोऽत्यल्पके भेले वैकुण्ठः कृष्णशक्रयोः ॥ १६ ॥
श्रीकण्ठो देशभिद्युग्रे साधिष्ठोऽतिदृढार्थयोः ।

( ठचतुष्कम् )

कलकण्ठः कलध्वाने हंसे पारावते पिके ॥ १७ ॥
कालकण्ठश्च दात्यूहे कलविङ्के च खञ्जने ।
मयूरे पीतसारे च स्यात् खण्डपरशौ पुमान् ॥ १८ ॥
कालपृष्ठं कर्णचापे पुंसि कङ्कविहङ्गमे ।
स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके ॥ १९ ॥
नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां तु योषिति ।
पूतिकाष्ठं च सरलदेवदारुमहीरुहोः ॥ २० ॥
सूत्रकण्ठः पुमान् विप्रे खञ्जरीटकपोतयोः ।
हारिकण्ठः पिके पुंसि हारान्वितगले त्रिषु ॥ २१ ॥

इति ठान्तवर्गः ।

---

( डैकम् )

डः पुमान् वाडवाग्नौ स्याड्डाकिन्यां स्त्री निगद्यते ।

( डद्विकम् )

अण्डं मुष्के च पेश्यां स्यादिडा तु बुधयोषिति ॥ १ ॥
सौरभेय्यां च वचने वसुमत्यामपि स्त्रियाम् ।
काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः ॥ २ ॥
कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम् ।
क्रीडा केलिप्रकारे स्यात् खेलावज्ञानयोरपि ॥ ३ ॥
कुण्डमग्न्यालये मानभेदे देवजलाशये ।
कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान् ॥ ४ ॥
पिठरे तु न ना क्ष्वेडो ध्वनौ कर्णामये विषे ।
क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति ॥ ५ ॥
लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् ।

दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्त्तितः ॥ ६ ॥
क्रोडः शनौ शूकरे ना न पुमानङ्करक्षसोः ।
खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः ॥ ७ ॥
खण्डः पानान्तरे भेदे गण्डः स्यात् पुंसि खड्गिनि ।
ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च ॥ ८ ॥
चिह्नवीरकपोलेषु हयभूषणबुद्बुदे ।
गड्डुः पृष्ठगुडे कुब्जे गडो मीनान्तराययोः ॥ ९ ॥
गुडः स्याद् गोलके हस्तिसन्नाहेक्षुविकारयोः ।
गुडा स्नुह्यां च कथिता गुडिकायां च योषिति ॥ १० ॥
गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति ।
चण्डो ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः ॥ ११ ॥
चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितोः ।
चण्डा धनहरीशङ्खपुष्प्योस्त्रिष्वतिकोपने ॥ १२ ॥
तीव्रेऽपि चूडा वडभौ शिखायां बाहुभूषणे ।
चोडः प्रावरणे भूम्नि देशभेदे जडा स्त्रियाम् ॥ १३ ॥
शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु ।
ताडस्तु ताडने घोषे मुष्टिमेयतृणादिषु ॥ १४ ॥
ताडी पत्रद्रुमे चाथ दण्डोऽस्त्री लगुडे पुमान् ।
व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥ १५ ॥
सैन्ये काले मानभेदे चण्डांशोः पारिपार्श्विके ।
दमे यमेऽभिमाने च नाडी नाले व्रणान्तरे ॥ १६ ॥
शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च ।
तथा षट्क्षणकालेऽपि नीडं स्थानकुलाययोः ॥ १७ ॥
पण्डः षण्डे धियि स्त्री स्यात् पाण्डुर्ना नृपतौ सिते ।
पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः ॥ १८ ॥
देहमात्रे निवापे च गोलसिह्लकयोरपि ।
आड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः ॥ १९ ॥
पिण्डी तु पिण्डीतगरेऽलाबुखर्जूरभेदयोः ।

पीडा कृपाशिरोमालाऽपमर्दसरलद्रुषु ॥ २० ॥
भाण्डं पात्रे वणिङ्मूलधने भूषाऽश्वभूषयोः ।
मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि ॥ २१ ॥
आमलक्यां स्त्रियां मण्डाथास्त्रियां सारपिच्छयोः ।
मुण्डो दैत्यान्तरे राहुग्रहे ना मुण्डिते त्रिषु ॥ २२ ॥
मुण्डा मुण्डीरिकायां स्यात् स्त्रियामस्त्री तु मूर्द्धनि ।
रण्डा मूषिकपर्ण्यां च विधवायां च योषिति ॥ २३ ॥
रोडः क्षोदे भवेत् पुंसि तृप्ते तु वाच्यलिङ्गकः ।
(१)रण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्जिते ॥ २४ ॥
व्याडो हिंस्रपशौ सर्पे शुण्डा पानगृहे मता ।
अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च ॥ २५ ॥
शौण्डो मत्ते च विख्यातः पिप्पल्यां च भवेत् स्त्रियाम् ।
षण्डं पद्मादिसङ्घाते न स्त्री स्याद् गापतौ पुमान् ॥ २६ ॥

( डत्रिकम् )

करण्डो मधुकोशासिकारण्डेषु दलाढके ।
कूष्माण्ड्युमायां स्त्री पुंसि कर्कारौ च गणान्तरे ॥ २७ ॥
भ्रूणान्तरेऽथ कोदण्डं चापे ना नीवृदन्तरे ।
भ्रुव्यथो गरुडं क्ष्वेडमन्त्रे मरकतेऽपि च ॥ २८ ॥
तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे ।
नौकायामपि न स्त्री स्यात्तिन्तिडीडिम्बचिञ्चयोः ॥ २९ ॥
द्राविडो देशभिज्जाते संख्याभिद्वेधमुख्ययोः ।
निर्गुण्डी नीलशेफाल्यां सिन्धुवारद्रुमेऽपि च ॥ ३० ॥
प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि ।
प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरोः ॥ ३१ ॥
शस्ते पिचण्ड उदरे पशोरवयवे पुमान् ।
पूत्यण्डो गन्धकीटेऽपि तथा जन्त्वन्तरे पुमान् ॥ ३२ ॥

---

( १ ) वण्डा—ख. ।

वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः ।
वारुण्डी द्वारपिण्ड्यां स्त्री फणिनां राजके पुमान् ॥ ३३ ॥
न स्त्रियां सेकपात्रे च मलेऽक्ष्णः श्रवणस्य च ।
भेरुण्डा देवताभेदयक्षिण्यन्तरयोः स्त्रियाम् ॥ ३४ ॥
भयानके वाच्यवत्स्यान्मार्त्तण्डः क्रोडसूर्ययोः ।
मारुण्डोऽण्डे भुजङ्गीनां मार्गे गोमयमण्डले ॥ ३५ ॥
वरण्डा सारिकावर्त्तिशस्त्रभेदे च योषिति ।
वितण्डा वादभेदे स्यात् कच्चीशाके शिलाह्वये ॥ ३६ ॥
करवीर्यामपि स्त्री स्याच्छिखण्डो बर्हचूडयोः ।
(१)शरण्डस्तु पुमान् धूर्त्ते शरटे भूषणान्तरे ॥ ३७ ॥

( डचतुष्कम् )

(२)अपागण्डस्तु वलिभे विकलाङ्ग शिशावपि ।
( )अतिगण्डा योगभेदे बृहद्गण्डे तु वाच्यवत् ॥ ३८ ॥
चक्रवाडोऽद्रिभेदे स्याच्चक्रवाडं तु मण्डले ।
जलरुण्डो जलावर्त्ते पयोरेणौ भुजङ्गमे ॥ ३९ ॥
देवताडः सैंहिकेये जीमूते च हुताशने ।
अथ वातहुडा(४) वात्यावातशोणितयोरपि ॥ ४० ॥
पिच्छिलस्फोटिकायां च वामायामपि योषिति ।

इति डान्तवर्गः ।

---

( ढैकम् )

ढो ढक्कायां पुमानुक्तः शुनि तस्य च लाङ्गुले ।

( ढद्विकम् )

गूढं रहसि गुह्ये च न द्वयोः संवृते त्रिषु ॥ १ ॥
दृढं स्थूले नितान्ते च प्रगाढबलवत्यपि ।

---

( १ ) सरण्डस्तु पुमान् धूर्ते सरटे–ख. ।　( २ ) अपागण्डं तु–ख.
( ३ ) इदं पद्यार्धं ख. पुस्तके नास्ति ।　( ४ ) वातशुडा–ख. ।

माढिः स्त्री पत्रभङ्गे च दैन्यस्यापि प्रकाशने ॥ २ ॥
मूढस्तु तन्द्रिते बाले राढा स्त्री सुह्मशोभयोः ।
रूढं जाते प्रसिद्धे च बाढं दृढप्रतिज्ञयोः ॥ ३ ॥
व्यूढः संहतविन्यस्तपृथुलेष्वभिधेयवत् ।
षोढा ना भारिके सूते षण्ढः स्यात् पुंसि गोपतौ ॥ ४ ॥
आकृष्टाण्डे वर्षवरे तृतीयाप्रकृतावपि ।
सोढा तितिक्षायुक्ते शक्ते चाप्यभिधेयवत् ॥ ५ ॥

( ढत्रिकम् )

अध्यूढा कृतसापत्न्यनार्यामध्यूढ ईश्वरे ।
आषाढो व्रतिनां दण्डे मासे मलयपर्वते ॥ ६ ॥
स्त्री पूर्णिमायामालीढं पादन्यासेऽशिते त्रिषु ।
उदू(१)ढमूढे स्थूले स्यादुपोढो निकटोढयोः ॥ ७ ॥
प्रगाढः कृच्छ्रदृढयोः प्रमीढो मूत्रिते घने ।
प्ररूढो जठरे बद्धमूले वारूढ इत्ययम् ॥ ८ ॥
वस्त्राञ्चले कपाटेऽग्नौ पञ्जरे शम्बलेऽपि च ।
विरूढोऽङ्कुरिते जाते विगूढो गर्हितेऽपि च ॥ ९ ॥
गुप्तेऽपि त्रिषु संरूढः प्रौढे चाङ्कुरिते त्रिषु ।
समूढः पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते ॥ १० ॥

( ढचतुष्कम् )

अध्यारूढं समारूढेऽभ्यधिके चाभिधेयवत् ।
खट्वारूढः श्रिते खट्वामविनीते च वाच्यवत् ॥ ११ ॥
प्रत्यालीढं तु चरणन्यासभेदेऽशिते त्रिषु ।

## इति ढान्तवर्गः ।

---

( णैकम् )

णः पुमान् बिन्दुदेवे स्याद् भूषणे गुणवर्जिते ।

( १ ) उदूढ ऊढे-ख. ।

पानीयनिलयेऽपीति केचिद्दचुर्विपश्चितः ॥ १ ॥

( णद्विकम् )

अणुर्व्रीहिविशेषे स्यात्पुंसि सूक्ष्मेऽभिधेयवत् ।
अणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयोः ॥ २ ॥
उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः ।
ऊर्णा मेषादिलोम्नि स्यादन्तरावर्तके भ्रुवोः ॥ ३ ॥
कर्णः पृथाज्येष्ठसुते सुवर्णाली श्रुतावपि ।
क्षणः पर्वोत्सवव्यापारेषु मानेऽप्यनेहसः ॥ ४ ॥
कणा जीरककुम्भीरमक्षिकापिप्पलीषु च ।
कणोऽतिसूक्ष्मे धान्यांशे काणः काकैकचक्षुषोः ॥ ५ ॥
कीर्णं (१)दत्ते च विक्षिप्ते हिंसितेऽप्यभिधेयवत् ।
कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत् ॥ ६ ॥
कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने ।
कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति ॥ ७ ॥
मेचके वाच्यलिङ्गं स्यात् क्लीबे मरिचलोहयोः ।
कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने ॥ ८ ॥
एकदेशे गृहादीनामश्रौ च लगुडेऽपि च ।
गणः प्रमथसंख्यौघे चण्डासैन्यप्रभेदयोः ॥ ९ ॥
गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ।
त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु ॥ १० ॥
शुक्लादावपि वस्त्र्यां च गेष्णुर्ना गायने नटे ।
घ्राणं क्लीबं नासिकायां घ्राते स्याद्वाच्यलिङ्गकम् ॥ ११ ॥
घृणा जुगुप्साकृपयोरथ चूर्णी कपर्दके ।
चूर्णो धूलौ क्षारभेदे चूर्णानिवासयुक्तिषु ॥ १२ ॥
जर्णश्चन्द्रे च वृद्धे च जिष्णुर्ना वासवेऽर्जुने ।
जित्वरे वाच्यवज्जीर्णं परिपक्वपुराणयोः ॥ १३ ॥

---

( १ ) छन्ने—ख. ।

फणिः क्रमुकभेदेऽपि दुष्टदैवश्रुतौ स्त्रियाम् ।
त्राणं तु त्रायमाणायां रक्षणे रक्षिते त्रिषु ॥ १४ ॥
तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके ।
क्लीबं, यवाग्रजे पुंसि तिग्मात्मत्यागिनोः त्रिषु ॥ १५ ॥
तूणी नील्यां निषङ्गे ना तृष्णा स्यात्तर्षलिप्सयोः ।
दीर्णं विदारिते भीते द्रुणं चापेऽलिनि द्रुणः ॥ १६ ॥
द्रुण्यम्बुद्रोणीकच्छप्योर्द्रुणुर्दातरि दुर्गमे ।
द्रोणोऽस्त्रियामाढके स्यादाढवापचतुष्टये ॥ १७ ॥
पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे ।
तथा काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते ॥ १८ ॥
पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे ।
क्रय्यशाकाट्टिकाद्यूतव्यवहारे भृतौ धने ॥ १९ ॥
पर्णं पत्रे किंशुके ना पार्ष्णिः स्यादुन्मदस्त्रियाम् ।
स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च ॥ २० ॥
प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले ।
पुंलिङ्गः पूरिते वाच्यलिङ्गः पुम्भूम्नि चासुषु ॥ २१ ॥
पूर्णः शक्ते समग्रे ना पूरिते त्वभिधेयवत् ।
फाणिर्गुडे करम्बे च स्त्रियां बाणी तु योषिति ॥ २२ ॥
व्यूतावपि सरस्वत्यां भ्रूणः स्त्रीगर्भडिम्भयोः ।
मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च ॥ २३ ॥
कण्ठदेशस्तनेऽजायलिङ्गाग्रेऽलिञ्जरेऽपि च ।
मीणः शुष्कफले नक्रे मक्षिकाऽहिकरण्डयोः ॥ २४ ॥
रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम् ।
रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः ॥ २५ ॥
वर्णो द्विजादिशुक्लादियशोगुणकथासु च ।
स्तुतौ ना, न स्त्रियां भेदरूपाक्षरविलेपने ॥ २६ ॥
बाणः स्याद् गोस्तने दैत्यभेदे केवलकाण्डयोः ।
बाणा तु बाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः ॥ २७ ॥

वीणा विद्युति वल्लक्यां वृष्णिः पाखण्डचन्द्रयोः ।
त्रिषु, ना यादवे मेषे वेणी केशस्य बन्धने ॥ २८ ॥
नद्यादेरन्तरे देवताले(१) वेणुर्नृपान्तरे ।
त्वक्सारेऽपि च पुंसि स्याच्छाणो मासचतुष्टये ॥ २९ ॥
लोहादीनां च निकषे शाणी प्रावरणान्तरे ।
श्राणं पक्वे यवाग्वां स्त्री शीर्णं तनुविशीर्णयोः ॥ ३० ॥
श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ ।
शोणः कृशानौ श्योनाके लोहिताश्वे नदे पुमान् ॥ ३१ ॥
त्रिषु काकनदच्छाये स्थाणुः कीले हरे पुमान् ।
अस्त्री ध्रुवेऽथ स्थूणा स्यात् सूर्म्यां स्तम्भे गृहस्य च ॥३२॥

( णत्रिकम् )

अरुणोऽव्यक्तरोगेऽर्के सन्ध्यारागेऽर्कसारथौ ।
निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ ३३ ॥
अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च ।
अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि ॥ ३४ ॥
अभीक्ष्णं तु भृशे नित्यतद्युक्तक्रिययोस्त्रिषु ।
इन्द्राणी करणे स्त्रीणां पौलोमीसिन्धुवारयोः ॥ ३५ ॥
ईरिणं तूषरे शून्येऽपीक्षणं दर्शने दृशि ।
ऊषणं मरिचे क्लीबं कणायामूषणा स्त्रियाम् ॥ ३६ ॥
एषणी व्रणमार्गानुसारिण्यां च तुलाभिदि ।
करुणस्तु रसे वृक्षे कृपायां करुणा मता ॥ ३७ ॥
कत्तृणं तृणभित्पृश्न्योः करणं हेतुकर्मणोः ।
(२)वीणजादौ हस्तलेपे नृत्यगीतप्रभेदयोः ॥ ३८ ॥
क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च ।
कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते ॥ ३९ ॥
कल्याणमक्षयस्वर्गे मङ्गलेऽपि नपुंसकम् ।

---

( १ ) देवताडे–ख. । ( २ ) बालवादौ–ख. ।

कङ्कणं करभूषायां सूत्रमण्डनयोरपि ॥ ४० ॥
करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे ।
कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च ॥ ४१ ॥
काकिणी पणतुर्यांशे मानदण्डे च दृश्यते ।
कृष्णलैकवराटयोः स्यादुन्मानस्यांशकेऽपि च ॥ ४२ ॥
कारणं करणे हेतुवधयोश्च नपुंसकम् ।
स्त्री यातनायां कुर्वाणो भृत्यकारकयोस्त्रिषु ॥ ४३ ॥
कृपाणः खड्गे छुरिकाकर्त्तर्योरपि योषिति ।
कृपणस्तु कृमौ पुंसि मन्दकुत्सितयोस्त्रिषु ॥ ४४ ॥
क्षेपणं प्रेरणे नौकादण्डजालभिदोः स्त्रियाम् ।
ग्रहणं स्वीकारादरकरोपरागोपलब्धिवन्दिषु (च) ॥ ४५ ॥
स्याद् ग्रामणीः प्रधानेऽधिपतौ त्रिषु नापिते पुंसि ।
ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत् ॥ ४६ ॥
गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे ।
अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ ॥ ४७ ॥
चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च ।
भ्रमणे भक्षणे चा(१)पि नपुंसक उदाहृतः ॥ ४८ ॥
जरणं जीरके(२)ऽजाजीहिङ्गुसौवर्चलेऽपि च ।
तरुणं कुब्जपुष्पे ना रुबुके यूनि तु त्रिषु ॥ ४९ ॥
तरणिर्द्युमणौ पंसि कुमारीनौकयोः स्त्रियाम् ।
दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्त्तिषु ॥ ५० ॥
आरामे त्रिषु, यज्ञादिविधिदाने दिशि स्त्रियाम् ।
द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे ॥ ५१ ॥
दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे ।
द्रुघणो मुद्गरेऽपि स्यात् द्रुहिणे च परश्वधे ॥ ५२ ॥
दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः ।

---

(१) वापि—ख. । (२) जीरकेऽपि स्यात् कृष्ण०—ख. ।

दौर्वीणं मृष्टपर्णं स्याद् दूर्वायां स्वरसेऽपि च ॥ ५३ ॥
धर्मणस्तु पुमान् वृक्षभेदसर्पप्रभेदयोः ।
धरणं मानभेदेऽपि धारणे धरणी भुवि ॥ ५४ ॥
धर्षणं स्यात् परिभवे रतेऽसत्यां तु धर्षिणी ।
धरुणः सम्मते नीरे स्वर्लोके परमेष्ठिनि ॥ ५५ ॥
धारणी नाडिकायां स्याद् बुद्धोक्तमन्त्रभिद्यपि ।
धारणाऽङ्गे च योगस्य न पुंसि स्याद् विधारणे ॥ ५६ ॥
धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति ।
निःश्रेणिरधिरोहिण्यां खर्जूरीपादपे स्त्रियाम् ॥ ५७ ॥
निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे ।
निर्माणं निर्मितौ सारे समञ्जसे नपुंसकम् ॥ ५८ ॥
निर्वाणमस्तङ्गमने निर्वृतौ गजमज्जने ।
सङ्गमेऽप्यपवर्गे च प्रवणो ना चतुष्पथे ॥ ५९ ॥
क्रमनिम्नमहीभागोदग्रप्रह्वेषु च त्रिषु ।
प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे ॥ ६० ॥
प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि ।
इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरि ॥ ६१ ॥
पत्रोर्णं धौतकौशेये क्लीबं स्याच्छोणके पुमान् ।
पक्षिणी पूर्णिमायां स्याद्विहङ्ग्यां शाकिनीभिदि ॥ ६२ ॥
आगामिवर्त्तमानाहर्युक्तरात्रावपि स्त्रियाम् ।
प्रवेणिः स्त्री कुथावेण्योः पुराणं पञ्चलक्षणे ॥ ६३ ॥
पणे पुंसि त्रिषु प्रत्ने पूरणः पूरके त्रिषु ।
क्लीबं पिण्डप्रभेदे च पूरणी शाल्मलिद्रुमे ॥ ६४ ॥
पटारम्भकसूत्रेषु प्रोक्षणं सेचने वधे ।
वरुणस्तरुभेदेऽप्सु पश्चिमाशापतावपि ॥ ६५ ॥
वरणस्तु पुमान् तिक्तशाकप्राकारयोरपि ।
क्लीबं कन्यादिवरणे वेष्टने स्त्री नदीभिदि ॥ ६६ ॥
वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे ।

ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम् ॥ ६७ ॥
भूमिदेवे तु पुंलिङ्गः फञ्जिकापृक्कयोः स्त्रियाम् ।
वारुणी गण्डदूर्वायां प्रतीचीसुरयोरपि ॥ ६८ ॥
भरणी घोषके ऋक्षे भरणं वेतने भृतौ ।
भ्रमणी कारुण्डिकायां क्रीडाद्यायामधीशितुः ॥ ६९ ॥
भीषणो रसे सल्लक्यां ना गाढे दारुणे त्रिषु ।
मसृणोऽकर्कशे स्निग्धे त्रिपूमायां तु योषिति ॥ ७० ॥
मत्कुणो निर्विषाणेभे निःश्मश्रुपुरुषेऽपि च ।
उद्देशे नारिकेले च मार्गणो याचके शरे ॥ ७१ ॥
याञ्चाऽन्वेषणयोः क्लीबं यन्त्रणं रक्षणे स्मृतम् ।
बन्धने स्यान्नियमने रवणः शब्दने खरे ॥ ७२ ॥
रमणं पटोलमूले नार्यां स्त्री ना धवे स्मरे ।
रोपणः पारदे हेमहर्षणोपलयोः पुमान् ॥ ७३ ॥
क्रोधने वाच्यलिङ्गः स्याद्रोहिणी कण्ठरुग्भिदि ।
तडित्कटम्भरासोमवल्कषु लोहितागवोः ॥ ७४ ॥
लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे ।
तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदत्विषोः स्त्रियाम् ॥ ७५ ॥
लक्षणं नाम्नि चिन्हे च सारस्यां लक्षणा क्वचित् ।
लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति ॥ ७६ ॥
रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत् ।
विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति ॥ ७७ ॥
कुष्ठनामौषधे क्लीबं पशुशृङ्गेभदन्तयोः ।
विपणिः पण्यवीथ्यां च भवेदापणपण्ययोः ॥ ७८ ॥
शरणं गृहरक्षित्रोर्वधरक्षणयोरपि ।
स्त्रियां सुदर्शनामांस्योर्मुण्डीरीशबरीभिदोः ॥ ७९ ॥
श्रवणं च श्रुतौ कर्णे नक्षत्रे न नपुंसकम् ।
श्रमणो यतिभेदे ना निन्द्यजीविनि तु त्रिषु ॥ ८० ॥
श्रावणो मासि पाषण्डे दध्याल्यां श्रावणा स्त्रियाम् ।

शिङ्घाणं काचपात्रे च लोहनासिकयोर्मले ॥ ८१ ॥
श्रीपर्णी काश्मरीकुम्भ्योः क्लीबं पद्माग्निमन्थयोः ।
सङ्कीर्णं निचितेऽपि स्यादशुद्धे चापि भेद्य(१)वत् ॥ ८२ ॥
सरणिः पङ्क्तौ मार्गे च सारणो राक्षसान्तरे ।
रुग्भेदे ना प्रसारण्यां स्वल्पनद्यां च सारणी ॥ ८३ ॥
सुषेणः करमर्दे स्याद्विष्णुसुग्रीववैद्ययोः ।
सुवर्णो ना स्वर्णकर्षे सुवर्णाख्यमखान्तरे ॥ ८४ ॥
श्रीकृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने ।
सुपर्णः स्वर्णचूडे च गरुडे कृतमालके ॥ ८५ ॥
सुपर्णा कमलिन्यां च वैनतेयस्य मातरि ।
हरेणुर्ना सतीले स्त्री रेणुकाकुलयोषितोः ॥ ८६ ॥
हरणं यौतकादीनां द्रव्ये भुजे हृतावपि ।
हरिणः पुंसि सारङ्गे विषदे त्वभिधेयवत् ॥ ८७ ॥
हरिणी हरितायां च नारीभिद्वृत्तभेदयोः ।
सुवर्णप्रतिमायां च हर्षणोऽक्षिरुगन्तरे ॥ ८८ ॥
हर्षके योगभेदे च श्राद्धदेवेऽपि च क्वचित् ।
हिरणं रेतसि स्वर्णे वराटे च नपुंसकम् ॥ ८९ ॥

( णचतुष्कम् )

अङ्गारिणी हसन्त्यां च भास्करत्यक्तदिश्यपि ।
अथर्वणिर्नाऽथर्वज्ञब्राह्मणे च पुरोधसि ॥ ९० ॥
आतर्पणं प्रीणने स्यान्मङ्गलालेपनेऽपि च ।
आरोहणं स्यात् सोपाने समारोहे प्ररोहणे ॥ ९१ ॥
उत्क्षेपणं तु व्यजने धान्यमर्दनवस्तुनि ।
स्यादुद्धरणमुद्धारवान्तान्नोन्मूलनेष्वपि ॥ ९२ ॥
कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च ।
अथ कामगुणो रागे विषयाभोगयोरपि ॥ ९३ ॥

---

( १ ) वाच्यवत्—ख. ।

चीर्णपर्णस्तु निम्बेऽपि खर्जूरीभूरुहे पुमान् ।
चूडामणिः शिरोरत्ने काकचिञ्चाफले पुमान् ॥ ९४ ॥
जुहु(१)वाणोऽपि चाध्वर्यावपि स्याज्जातवेदसि ।
तण्डुरीणः कीटमात्रे बर्बरे तण्डुलोदके ॥ ९५ ॥
त्रायमाणा वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत् ।
तैलपर्णी मलयजे श्रीवासे सिह्लकेऽपि च ॥ ९६ ॥
दाक्षायणी त्वपर्णायामश्विन्याद्युडुषु स्त्रियाम् ।
अथ देवमणिर्भगऽश्वावर्ते कौस्तुभेऽपि (२)च ॥ ९७ ॥
नारायणोऽच्युते भीरुगौर्योर्नारायणी मता ।
अथो निगरणं क्लीबं भोजने स्याद्गले पुमान् ॥ ९८ ॥
अथ निःसरणं मृत्यूपायमोक्षेषु निर्गमे ।
स्यान्निस्तरणमुपाये निस्तारे तरणेऽपि च ॥ ९९ ॥
निरूपणं स्यादालोके विचारे च निदर्शने ।
पर्परीणश्च पर्णस्य शिरायां द्यूतकम्बले ॥ १०० ॥
पर्णचूर्णरसेऽपि स्यात् पर्परीणं तु पर्वणि ।
प्रवारणं निषेधे स्यात् काम्यदाने च न द्वयोः ॥ १०१ ॥
परीरणः स्यात् कमठे दण्डे च पट्टशाटके ।
परायणमभीष्टे स्यात्तत्पराश्रययोरपि ॥ १०२ ॥
परवाणिः पुमान् धर्माध्यक्षवत्सरयोरपि ।
पारायणं समासङ्गे कार्त्स्न्ये पारगतावपि ॥ १०३ ॥
पीलुपर्णी बिम्बिकायां मूर्वायामोषधीभिदि ।
अथ पुष्करिणी चेभ्यां सरोजिन्यां जलाशये ॥ १०४ ॥
मधुपर्णी तु गाम्भीर्यां नीलीसंज्ञौषधावपि ।
मीनाम्रीणस्तु पुंलिङ्गो दर्दुराम्रे च खञ्जने ॥ १०५ ॥
रक्तरेणुस्तु सिन्दूरे पलाशकोरके पुमान् ।
रागचूर्णः पुमान् दन्तधावने मकरध्वजे ॥ १०६ ॥

---

( १ ) जुहुराणोऽपि—ख. । ( २ ) ना—ख. ।

रेरिहाणस्तु पुंसि स्यान्महादेवेऽम्बरेऽपि च ।
लम्बकर्णः स्मृतोऽङ्कोठपादपे छगलेऽपि च ॥ १०७ ॥
विदारणं विडम्बे च भेदे क्लीबं रणे द्वयोः ।
अथ वैतरणी दुर्यां प्रेतानां यातुमातरि ॥ १०८ ॥
शरवाणिः शरमुखे पायिके शरजीविनि ।
पुमानथो शिखरिणी रसालवृत्तभेदयोः ॥ १०९ ॥
नारीरत्ने मल्लिकायां रोमावल्यामपि स्त्रियाम् ।
अथ संसरणं क्लीबमसम्बाधचमूगतौ ॥ ११० ॥
घण्टापथे च संसारे रणारम्भे च कुत्रचित् ।
समीरणः स्यात् पवने पथिके च फणिज्जके ॥ १११ ॥
हस्तिकर्णश्चोरुबूके पलाशगणभेदयोः ।

( णपञ्चकम् )

अवग्रहणमित्येतत् प्रतिरोधेऽप्यनादरे ॥ ११२ ॥
अवतारणं भूतादिग्रहे वस्त्राञ्चलेऽर्चने ।
प्रविदारणमाख्यातं सम्परायेऽवदारणे ॥ ११३ ॥
परिभाषणं सनिन्दोपालम्भे नियमेऽपि च ।
उक्तो मत्तवारणस्तु प्रक्लिन्नकटकुञ्जरे ॥ ११४ ॥
क्ली ' प्रासादवीथीनां कुन्दवृक्षवृतावपि ।
मण्डूकपर्णी मञ्जिष्ठाब्राह्मण्योर्ना तु शोणके ॥ ११५ ॥
रोम(१)हर्षणं रोमाञ्चे ना सूते च बिभीतके ।
वातरायण उन्मत्ते निष्प्रयोजनपूरुषे ॥ ११६ ॥
काण्डे च करपत्रे च कूटे च परसङ्क्रमे ।

( णषट्कम् )

दोहदलक्षणमुक्तं वयसः सन्धौ च गर्भे च ॥ ११७ ॥
यौवनलक्षणमप्याख्यातं लावण्यकुचयोश्च ।

## इति णान्तवर्गः ।

---

( १ ) लोमहर्षणं—ख. ।

( तैकम् )

तश्चौरामृतपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित् ।
अपुमांस्तरणे पुण्ये कथितः शब्दवेदिभिः ॥ १ ॥

( तद्विकम् )

अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाचले ।
अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु ॥ २ ॥
आर्त्तिः पीडाधनुष्कोट्योः स्त्र्याप्तो लब्धे स्वसत्ययोः ।
आप्तिः स्त्री योगसम्प्राप्त्योरितं स्मृते गते त्रिषु ॥ ३ ॥
ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियाम् ।
उक्तमेकाक्षरच्छन्दस्युक्तं स्याद्भाषिते त्रिषु ॥ ४ ॥
ऊतिः स्त्री रक्षणे स्यूतावृतिः कल्याणवर्त्मनोः ।
जुगुप्सास्पर्द्धयोः स्त्री स्यादृतमुञ्छशिले जले ॥ ५ ॥
सत्ये दीप्ते पूजिते स्यादृतुर्वर्षादिषट्सु च ।
आर्तवे भासि च पुमानेतः कर्बुर आगते ॥ ६ ॥
क्षत्ता शूद्रात् क्षत्रियाजे प्रतीहारे च सारथौ ।
भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान् ॥ ७ ॥
कर्त्ता तु कारके वाच्यलिङ्गो ना परमेष्ठिनि ।
क्रतुर्यज्ञे मुनौ पुंसि कान्तिः शोभेच्छयोः स्त्रियाम् ॥ ८ ॥
कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे ।
लोहे च चन्द्रसूर्यायःपर्यायान्तःशिलासु च ॥ ९ ॥
क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम् ।
कीर्तिः प्रसादयशसोर्योषित् कुन्तो गवेधिकायां स्यात्॥१०॥
प्रासायुधे च कुन्ती गुग्गुलुपृथयोश्च शल्लक्याम् ।
कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु ॥ ११ ॥
कृत्तं तु वेष्टिते छिन्ने कृतिः करणहिंसयोः ।
कृत्तिश्चर्मत्वचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियाम् ॥ १२ ॥
केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि ।
गर्तस्त्रिगर्त्तभेदे स्यादवटे च कुकुन्दरे ॥ १३ ॥

ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदेऽपि च ।
गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राऽभ्युपाययोः ॥ १४ ॥
नाडीव्रणसरण्यां च गतं विज्ञानयातयोः ।
गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे ॥ १५ ॥
गीतिश्छन्दसि गाने स्त्री गीतं शब्दितगानयोः ।
गुप्तिः स्त्र्यवकरस्थाने कारागारे च रक्षणे ॥ १६ ॥
गुप्तं स्याद्रक्षिते गूढे घातः काण्डप्रहारयोः ।
घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् ॥ १७ ॥
चितं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम् ।
चितिश्चित्यावृन्दयोः स्त्री जातं व्यक्तौघजन्मसु ॥ १८ ॥
क्लीबं त्रिलिङ्गमुत्पन्ने जातिः स्त्री गोत्रजन्मनोः ।
अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि ॥ १९ ॥
जातीफले च मालत्यां ज्ञातिस्तातसगोत्रयोः ।
पुमानथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् ॥ २० ॥
क्लीबं वीणादिवाद्ये स्यात् पुंलिङ्गस्तु समीरणे ।
तातोऽनुकम्प्ये जनके तिक्तो रससुगन्धयोः ॥ २१ ॥
तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम् ।
तृस्तं रेणौ च विख्या(१)तं जटायां च नपुंसकम् ॥ २२ ॥
त्रेता युगेऽग्नित्रितये दत्तं विश्राणितेऽर्चिते ।
दन्तोऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम् ॥ २३ ॥
दान्तस्तु दमितेऽपि स्यात्तपःक्लेशसहे त्रिषु ।
दितिर्दैत्यजनन्यां च खण्डनेऽपि च योषिति ॥ २४ ॥
दीप्तं निर्भासिते दग्धे ज्वलितेऽथ द्रुतं त्रिषु ।
शीघ्रे विलीने विद्राणे द्युतिः स्त्री रश्मिशोभयोः ॥ २५ ॥
दृतिश्चर्मपुटे मत्स्ये ना धातुर्नेन्द्रियेषु च ।
शब्दयोनिमहाभूततद्गुणेषु रसादिषु ॥ २६ ॥

---

(१) पापे. च. ख. ।

मनःशिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थिन च ।
धाता हिरण्यगर्भे ना पालके त्रिष्वथो धुतम् ॥ २७ ॥
त्यक्ते विधूते धूतं तु कम्पिते भर्त्सिते त्रिषु ।
धूर्त्तं तु खण्डलवणे धुस्तूरे ना विटे त्रिषु ॥ २८ ॥
धृतिर्नष्टौ स्त्रियां तुष्टौ योगभिद्धैर्यधारणे ।
नतं तगरपाद्यां स्यात् क्लीबं कुटिलनम्रयोः ॥ २९ ॥
त्रिषु नीतिर्नयेऽपि स्यात् प्रापणेऽपि च योषिति ।
पक्तिः स्त्री गौरवे पाके पत्तिर्ना पदगे स्त्रियाम् ॥ ३० ॥
गतावेकरथैकेभत्र्यश्वपञ्चपदातिके ।
पङ्क्तिर्दशाक्षरच्छन्दोदशसंख्यालिषु स्त्रियाम् ॥ ३१ ॥
पतिर्धवे ना त्रिष्वीशे प्राप्तं लब्धे समञ्जसे ।
पातो ना पतने त्राते त्रिषु प्राप्तिर्महोदये ॥ ३२ ॥
लाभेऽपि च स्त्रियां प्रातिः पूर्त्तिप्रादेशयोः स्त्रियाम् ।
पीतिर्नाऽश्वे स्त्रियां पाने प्रीतं हृषितनर्मणोः ॥ ३३ ॥
पीतं पाने हरिद्रायां स्त्रियां गौरेऽभिधेयवत् ।
प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम् ॥ ३४ ॥
पुस्तं क्लीबे पुस्तके च लेप्यादिशिल्पकर्मणि ।
प्लुतं तुरङ्गमगतौ क्लीबं पुंसि त्रिमात्रके ॥ ३५ ॥
पूतं त्रिषु पवित्रे च शठिते बहुलीकृते ।
पूर्त्तं त्रिषु पूरिते स्यात् क्लीबं खातादिकर्मणि ॥ ३६ ॥
प्रोतं नपुंसकं वस्त्रे खचिते वाच्यलिङ्गकम् ।
प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः ॥ ३७ ॥
पोतः शिशौ वहित्रे च गृहस्थाने च वाससि ।
वृतिस्तु वरणेऽपि स्याद्वेष्टनेऽपि च योषिति ॥ ३८ ॥
भर्त्ता स्वामिनि पुंसि स्यात् त्रिषु धातरि पोष्टरि ।
भक्तिर्विभागे सेवायां स्त्रियां भ्रान्तिस्तु योषिति ॥ ३९ ॥
मिथ्यामतौ च भ्रमणे भित्तिः कुड्यप्रदेशयोः ।
भीतिर्भये स्त्रियां भीतं भयेऽथ भीयुते त्रिषु ॥ ४० ॥

भूतिर्भस्मनि सम्पत्तौ हस्तिशृङ्गारयोः स्त्रियाम् ।
भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते ॥ ४१ ॥
प्राप्ते वित्ते समे सत्ये देवयोन्यन्तरे तु ना ।
कुमारेऽपि भृतिः स्त्री स्यान्मूल्येऽपि भरणेऽपि च ॥ ४२ ॥
मतं तु सम्मते ज्ञाते मतिः स्त्रीच्छाधियोः स्मृतौ ।
मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ ॥ ४३ ॥
माता गौर्वादिजननीगोब्रह्माण्यादिभूमिषु ।
(१)मातिर्मानेऽप्यवच्छेदे मुक्तिर्मोक्षे च मोक्षणे ॥ ४४ ॥
मात्रादयः स्त्रियां मुक्तः प्राप्तमोक्षे च मोचिते ।
त्रिषु स्त्री मौक्तिके मूर्त्तिः कायकाठिन्ययोः स्त्रियाम् ॥४५॥
मूर्त्तं स्यात् त्रिषु मूर्च्छाले कठिने मूर्त्तिमत्यपि ।
मृतं तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु ॥ ४६ ॥
यतिः स्त्री (२)पाठविच्छेदे निकारयतिनोः पुमान् ।
यन्ता (३)मेठे च सूते ना युक्तिः स्त्री न्याययोगयोः ॥ ४७ ॥
युतो युक्तोऽपृथग्भूते क्लीबं हस्तचतुष्टये ।
रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु ॥ ४८ ॥
क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलके सृजि ।
रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः ॥ ४९ ॥
रत्नं वर्त्मनि नद्यां स्त्री रतं सुरतगुह्ययोः ।
रतस्त्रिष्वनुरक्ते स्यात् तत्परे चाभिधेयवत्(४) ॥ ५० ॥
रिक्तं शून्ये वने रीतिः स्त्रियां स्यन्दप्रचारयोः ।
पित्तले लोहकिट्टे च लता प्रियङ्गुशाखयोः ॥ ५१ ॥
पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च ।
माधवीदूर्वयोर्लिप्तं विलिप्तविषदिग्धयोः ॥ ५२ ॥
भुक्ते लूता तूर्णनाभे पिपीलिकागदान्तरे ।

---

( १ ) मितिः—ख. ।　( २ ) पाद—क. ।
( ३ ) यन्ता हस्तिपके सूते—ख. ।　( ४ ) अधिकं पद्यार्धमिदम्—ख. ।

वप्ता तु जनके पुंसि वापकेऽप्यभिधेयवत् ॥ ५३ ॥
वक्ता तु पण्डितेऽपि स्याद्वाग्मिन्यप्यन्यलिङ्गकः ।
व्यस्तं तु व्याकुले व्याप्ते व्यक्तः स्फुटमनीषिणोः ॥ ५४ ॥
वस्तिर्द्वयोर्निरूहे नाभ्यधो भूम्नि दशासु च ।
वर्त्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः ॥ ५५ ॥
गात्रानुलेपनीदीपदशादीपेषु योषिति ।
वार्त्ता तु वर्त्तने वार्तिङ्गणे कृष्याद्युदन्तयोः ॥५६॥
निःसारारोग्ययोः क्लीबं वृत्तिर्मल्लीरुजोः स्त्रियाम् ।
व्याप्तं ख्याते समाक्रान्ते व्याप्तिर्व्यापनलम्भयोः ॥ ५७ ॥
स्त्रियां वित्तिर्विचारे च लाभसम्भावयोः स्त्रियाम् ।
वित्तं क्लीबं धने वाच्यलिङ्गं ख्याते विचारिते ॥ ५८ ॥
वीतमसारगजे स्यादङ्कुशकर्मण्यसारतुरगेऽपि ।
वीतिर्गतौ च दीप्तौ प्रजनाशनधावनेषु स्त्री ॥ ५९ ॥
वृत्तिर्विवरणाजीवकैशिक्यादिप्रवर्तने ।
वृन्तं प्रसवबन्धेऽस्त्री घटीधाराकुचाग्रयोः ॥ ६० ॥
वृत्तोऽधीतेप्यतीतेऽतिवर्तुलेऽपि वृते मृते ।
दृढेऽन्यलिङ्गं वा क्लीबं छन्दश्चारित्रवृत्तिषु ॥ ६१ ॥
शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम् ।
शस्तं क्षेमे प्रशस्ते च शान्तिः स्त्री मङ्गले शमे ॥ ६२ ॥
शास्ता समन्तभद्रे ना शासने पुनरन्यवत् ।
शान्तोऽभियुक्तरसयोः पुंसि त्रिषु शमान्विते ॥ ६३ ॥
अव्ययं वारणे शान्तं शान्तं शितं च दुर्बले ।
निशिते च शितिर्भूर्जे ना सितासितयोस्त्रिषु ॥ ६४ ॥
शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु ।
वानीरे बहुवारे ना शुक्तं पूताम्लनिष्ठुरे ॥ ६५ ॥
श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवा(१)तयोः स्त्रियाम् ।

( १ ) वार्तयोः—ख. ।

शुक्तिः कपालशकले शङ्खे शङ्खनखेऽपि च ॥ ६६ ॥
नख्यश्चावर्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम् ।
श्रुतमाकर्णिते शास्त्रे श्वेतो द्वीपाद्रिभेदयोः ॥ ६७ ॥
श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च ।
क्लीबं रूप्येऽन्यवच्छुक्ले सन् साधौ धीरशस्तयोः ॥ ६८ ॥
मान्ये सत्ये विद्यमाने त्रिषु साध्युमयोः स्त्रियाम् ।
सातिर्दानेऽवसाने स्त्री स्वान्तं चेतसि गह्वरे ॥ ६९ ॥
स्थितं प्रतिज्ञातवति चोर्ध्वनिश्चलयोस्त्रिषु
स्थितिः स्त्रियामवस्थाने मर्यादायां च सीमनि ॥ ७० ॥
सितमवसिते च बद्धे धवले त्रिषु धवलायां स्त्री ।
सीता लाङ्गलपद्धतिर्वैदेहीस्वर्गगङ्गासु ॥ ७१ ॥
सुतस्तु पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता ।
सुप्तिः स्पर्शाज्ञतानिद्राविश्रम्भे शयने स्त्रियाम् ॥ ७२ ॥
सूतस्तु सारथौ तक्षिण क्षत्रियाद् ब्राह्मणीसुते ।
बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु ॥ ७३ ॥
स्यूतिः सीवनमन्तत्योः स्त्रियां स्यूतः प्रसेवके ।
ना त्रिपूते स्मृतिर्धर्मशास्त्रस्मरणयोः स्त्रियाम् ॥ ७४ ॥
सृतिः स्त्री गमने मार्गे हेतुर्नाऽऽली कुमारके ।
हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च ॥ ७५ ॥
ऋत्ते केशात् परो व्राते हितं पथ्ये गते धृते ।
हेतिः स्यादायुधज्वालासूर्यतेजःसु योषिति ॥ ७६ ॥

( तत्रिकम् )

अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते ।
अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः ॥ ७७ ॥
अमृता मागधीपथ्यागुडूच्यामलकीषु च ।
अनृतं कृषावसत्येऽप्यजितो ना हरौ त्रिषु ॥ ७८ ॥
अनिर्जिते चाच्युतस्तु हरौ पुंसि त्रिषु स्थिरे ।
अर्दितं याचितेऽपि स्याद्वातव्याधौ च हिंसिते ॥ ७९ ॥

अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते ।
यवेऽपि क्वचिदव्यक्तो हरौ स्मरहरे पुमान् ॥ ८० ॥
परमात्ममहद्दाद्योः क्लीबं स्यादस्फुटे त्रिषु ।
अनन्तः केशवे शेषे पुमाननवधौ त्रिषु ॥ ८१ ॥
अनन्ता च विशल्यायां शारिवादूर्वयोरपि ।
कणादुरालभापथ्यापार्वत्यामलकीषु च ॥ ८२ ॥
विश्वम्भरागुडूच्योः स्यादनन्तं सुरवर्त्मनि ।
आश्मन्तमशुभे चुल्यां मरणेऽनवधावपि ॥ ८३ ॥
क्षेत्रेऽप्यथायतिः पुंसि हिमदीधितिकालयोः ।
अर्हंस्तु क्षपणे बुद्धे पुंसि मान्येऽन्यलिङ्गकः ॥ ८४ ॥
अर्हन्तश्चापि सुगते क्षपणेऽपि च दृश्यते ।
अगस्तिः कुम्भयोनौ च (१)वङ्कसेनतरौ पुमान् ॥ ८५ ॥
अर्वती कुम्भदास्यां च वडवायां च योषिति ।
अङ्गतिः पुंस्यग्निहोतृब्रह्मवह्निष्वथादितिः ॥ ८६ ॥
भूदेवमात्रोरंहतिस्त्यागे रोगेऽप्युभे स्त्रियौ ।
आपातः पुंसि पतने तदात्वे च प्रकीर्तितः ॥ ८७ ॥
आघ्रातं शिङ्खिते क्रान्तेऽप्याख्यातं भाषिते तिङि ।
आध्मातः शब्दिते दग्धे वातरुग्भेदसंयुते ॥ ८८ ॥
आप्लुतः स्नातके स्नातेऽप्यादृतः सादरेऽर्चिते ।
आचितः शकटोन्मेये पलानामयुतद्वये ॥ ८९ ॥
पुंलिङ्गः सङ्गृहीतेऽपि छन्नेऽपि स्यात्त्रिलिङ्गकः ।
आहतं गुणिते चापि ताडिते च मृषाऽर्थके ॥ ९० ॥
स्यात् पुरातनवस्त्रेऽपि नववस्त्रे च नाऽऽनके ।
आनर्तो देशभेदेऽपि नृत्यस्थाने जले रणे ॥ ९१ ॥
आवर्तश्चिन्तने वारिभ्रमे चावर्तने पुमान् ।
आस्फोतं तु पुमानर्कपर्णे स्यात् कोविदारके ॥ ९२ ॥

---

( १ ) वज्रसेन०—ख. ।

आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति ।
आयस्तस्तेजिते क्षिप्ते क्लेशिते कुपिते हते ॥ ९३ ॥
आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः ।
आयत्तिस्तु स्त्रियां स्नेहे वशित्वे वासरे बले ॥ ९४ ॥
आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि ।
आसत्तिः सङ्गमे लाभे स्त्रियामापत्तिरापदि ॥ ९५ ॥
प्रापणेऽपि च योषित्स्यादुदन्तः साधुवार्तयोः ।
उषितं व्युषिते दग्धेऽप्युदात्तस्तु स्वरान्तरे ॥ ९६ ॥
दयात्यागादिसम्पन्ने काव्यालङ्कारकृत्ययोः ।
उत्तप्तं शुष्कमांसेऽथ त्रिषु तप्ते परिप्लुते ॥ ९७ ॥
उचितं तु भवे न्यस्ते मिते ज्ञाते समञ्जसे ।
उद्धृतं स्यात्त्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि च ॥ ९८ ॥
उत्थितं स्यात्त्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपि ।
उद्घातस्तु पुमान् पादस्खलने समुपक्रमे ॥ ९९ ॥
(१)पवनाभ्यासयोगस्य कालभेदे च कीर्तितः ।
उत्तुङ्गे मुद्गरेऽपि स्यादुदितं तूक्त आगते ॥ १०० ॥
उच्छ्रितं त्रिषु सञ्जाते समु(२)न्नद्धप्रवृद्धयोः ।
उन्मत्त उन्मादवति धूस्तूरमुचुकुन्दयोः ॥ १०१ ॥
उद्भ्रान्तो निर्मदगजे पुमानुद्भ्रमिते त्रिषु ।
ऋधतुः पुरुषेऽग्नौ ना कलितं विदिताप्तयोः ॥ १०२ ॥
कपोतः स्याच्चित्रकण्ठपारावतविहङ्गयोः ।
अथ क्रन्दितमाह्वाने रुदितेऽपि नपुंसकम्॥ १०३ ॥
क्षारितः स्त्रावित क्षारे चाभिशस्तेऽपि च त्रिषु ।
कापोतो रुचके क्लीबे कपोतौघेऽञ्जनान्तरे ॥ १०४ ॥
किरातो म्लेच्छभेदे स्यात् भूनिम्बेऽल्पतनावपि ।
स्त्रियां चामरधारिण्यां कुट्टिनीदुर्गयोरपि ॥ १०५ ॥

---

(१) पवनाभ्यासयोगाय कुम्भकादित्रयेऽपि च-ख. । (२) समुन्नत-ख.

कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ।
गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे ॥ १०६ ॥
ग्रथितं गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम् ।
गभस्तिः किरणे सूर्ये ना स्वाहायां तु योषिति ॥ १०७ ॥
गभुत् स्त्री स्वर्ण(१)लतयोर्गोपतिः शिवषण्ढयोः ।
नृपभास्करयोः पुंसि चेष्टितं गतिचेष्टयोः ॥ १०८ ॥
जगत् स्यात् विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु ।
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ॥ १०९ ॥
जयन्तो वृक्षभिद्गौर्योरिन्द्रपुत्रीपताकयोः ।
पुमानैन्द्रे हरे भीमे ज्वलितं दग्ध उज्वले ॥ ११० ॥
जामाता दुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान् ।
जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे ॥ १११ ॥
जीवातुर्नास्त्रियां भक्ते जीविते जीवनौषधे ।
जीवन्ती जीवनीशम्योर्गुडूचीवृन्दयोरपि ॥ ११२ ॥
जृम्भितं करणे स्त्रीणामीहास्फोटितयोरपि ।
त्वरितं प्रजवे शीघ्रे त्रिगर्तो गणितान्तरे ॥ ११३ ॥
देशेऽपि ना घुर्घुरिकाकामुकाङ्गनयोः स्त्रियाम् ।
तृणता धनुषि तृणत्वे दंशितमपि जातदंशे स्यात् ॥ ११४ ॥
कवचाचिते द्विजातिर्विप्राण्डजयोश्च पुंलिङ्गः ।
दुर्जातं व्यसने क्लीबे सम्यग्जातेऽन्यलिङ्गकम् ॥ ११५ ॥
दुर्गतिर्नरके नैस्स्व्ये स्त्री दृष्टान्त उदाहृतौ ।
शास्त्रे च मरणे धीमान् पण्डिते च बृहस्पतौ ॥११६॥
निर्ऋतिः स्यादलक्ष्म्यां स्त्री दिशापालान्तरे पुमान् ।
निकृतं विप्रलम्भे (२)स्यान्नीचे विप्रकृतेऽपि च ॥ ११७ ॥
निर्मुक्तस्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि ।
निरस्तस्त्रिषु निष्ठ्यूते प्रेषितेषौ द्रुतोदिते ॥ ११८ ॥

---

( १ ) नडयोः–ख. । ( २ ) स्यात् शठे विप्रकृते त्रिषु-ख. ।

सन्त्यक्ते च प्रतिहते निमित्तं हेतुलक्ष्मणोः ।
निवातो दृढसन्नाहे वातशून्येऽपि चाश्रये ॥ ११९ ॥
निशान्तं त्रिषु शान्ते स्यात् क्लीबं तु भवनोषसोः ।
निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम् ॥ १२० ॥
निर्वृतिः सुस्थितावस्तगमने च सुखे स्त्रियाम् ।
नियतिर्नियमे दैवे स्त्री पतन् पातुके खगे ॥ १२१ ॥
प्रहतं वितते क्षुण्णे पर्यस्तः पतिते हते ।
प्रभूतमुद्गते प्राज्ये पण्डितः सिल्हके कवौ ॥ १२२ ॥
पलितं शैलजे तापे केशपाके च कर्दमे ।
प्रसृतः सुप्रसारे स्याद्विनीते वेगिते त्रिषु ॥ १२३ ॥
अर्द्धाञ्जलौ तु पुंलिङ्गो जङ्घायां प्रसृता मता ।
प्रसूतं कुसुमे क्लीबं त्रिषु सञ्जातसूतयोः ॥ १२४ ॥
प्रणीतः संस्कृताग्नौ ना यज्ञपात्रान्तरे स्त्रियाम् ।
त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते ॥ १२५ ॥
प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु ।
प्रमीतं वाच्यलिङ्गं स्यात् प्रोक्षितेऽपि मृतेऽपि च ॥ १२६ ॥
परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान् ।
पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः ॥ १२७ ॥
देवमुन्यन्तरे शैले प्रपातो निर्झरे तटे ।
पर्याप्तं तु यथेष्टे स्यात्तृप्तौ शक्ते निवारणे ॥ १२८ ॥
पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति ।
पक्षतिश्च भवेत् पक्षमूले च प्रतिपत्तिथौ ॥ १२९ ॥
प्रसूतिरुद्भवेऽपि स्यात्तनये दुहितर्यपि ।
प्रततिर्विस्तृतौ वल्यां पद्धतिः पङ्क्तिवर्त्मनोः ॥ १३० ॥
प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्त्तने ।
अवन्त्यादौ च पर्याप्तिः प्रकामप्राप्तिरक्षणे ॥ १३१ ॥
प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः ।
योनौ लिङ्गे पौरवर्गेऽमी पक्षत्यादयः स्त्रियाम् ॥ १३२ ॥

पार्वती सल्लकीदुर्गागोपालपुत्रिकासु च ।
प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहते त्रिषु ॥ १३३ ॥
पित्सन् विहङ्गमे पुंसि पतनेच्छौ पुनस्त्रिषु ।
पिशितं मांसे मांस्यां स्त्री पिण्डितं गुणिते घने ॥ १३४ ॥
पीडितं करणे स्त्रीणां यन्त्रिते बाधितेऽपि च ।
पुटितं स्या(१)दहिपुटे पाटितस्यूतयोरपि ॥ १३५ ॥
पृषन् मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना ।
अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ ॥ १३६ ॥
प्रोक्षितं निहते सिक्ते बृहती वसनान्तरे ।
छन्दोभित्क्षुद्रवार्ताकीवारिधानीषु वाचि च ॥ १३७ ॥
कण्टकारीमहत्योश्च भवेद्युष्मत्सतोस्त्रिषु ।
स्त्री बाणभेदे भरतो नाट्याशास्त्रमुनौ तटे ॥ १३८ ॥
रामानुजे च दौष्यन्तौ भास्वान् भास्वरसूर्ययोः ।
भारतं ग्रन्थभेदे स्याद्वर्षभेदेऽथ भारती ॥ १३९ ॥
वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः ।
भासन्तः सुन्दराकारे त्रिषु ना भासपक्षिणि ॥ १४० ॥
भावितं वासिते प्राप्ते भूभृन्नाऽद्रौ महीपतौ ।
महती वल्लकीभेदे राज्ये स्यात्तु नपुंसकम् ॥ १४१ ॥
तत्त्वभेदे पुमान् वृद्धे वाच्यवन्मथितं पुनः ।
क्लीबं निर्जलघोले स्यात् त्रिष्वालोडितघृष्टयोः ॥ १४२ ॥
मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम् ।
मुषितं हृतखण्डितयोर्मूर्च्छितमपि सोच्छ्रये च मूढे च॥१४३॥
रजतं त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णे ।
रमतिर्नायके नाके पुंसि स्याद्रसितं पुनः ॥ १४४ ॥
रुतस्तनितयोः क्लीबं स्वर्णादिखचिते त्रिषु ।
रेवती हलिपत्न्यां स्यात्तारामिन्मातृभेदयोः ॥ १४५ ॥

( १ ) स्यात् हस्तपुटे—ख. ।

रैवतस्तु सुवर्णालौ शैलभेदे च शङ्करे ।
रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने ॥ १४६ ॥
पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे ।
रोहिन् मृग्यां लताभेदे स्त्री नाऽर्के ललितं त्रिषु ॥ १४७ ॥
ललिते चेशितेऽपि स्याद्धारभेदे तु न द्वयोः ।
लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने ॥ १४८ ॥
पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति ।
वर्द्धितं प्रसिते छिन्ने पूरिते वहतिर्गवि ॥ १४९ ॥
सचिवे पुंसि वहतुः पथिके वृषभे पुमान् ।
वनिता जातरागस्त्रीस्त्रियोस्त्रिषु च याचिते ॥ १५० ॥
सेविते वापितं बीजाकृतमुण्डितयोस्त्रिषु ।
वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने ॥ १५१ ॥
व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यवत् ।
व्याघातो योगभेदे स्यादन्तरायप्रहारयोः ॥ १५२ ॥
वासिता करिणीनार्योर्वासितं भाविते रुते ।
वासन्ती माधवीयूथ्योरुष्ट्रे नाऽवहिते त्रिषु ॥ १५३ ॥
विविक्तं त्रिष्वसम्पृक्ते रहःपूतविवेकिषु ।
वसुनन्दे ना विहस्तः पण्डिते व्याकुले त्रिषु ॥ १५४ ॥
विनीतः सुवहाश्वे स्याद्वणिज्यपि पुमांस्त्रिषु ।
जितेन्द्रियेऽपनीते च निभृते विनयान्विते ॥ १५५ ॥
विश्वस्तो जातविश्वासे विश्वस्ता विधवास्त्रियाम् ।
विद्युत्तडिति सन्ध्यायां स्त्रियां त्रिषु तु निष्प्रभे ॥ १५६ ॥
विवृता क्षुद्ररुग्भेदे विस्तृते त्वभिधेयवत् ।
विनेताऽदेशके राज्ञि ना विधाता तु वेधसि ॥ १५७ ॥
स्मरे ना विनता तार्क्ष्यजनन्यां पटकाभिदि ।
विनतः प्रणते भुग्ने शिक्षिते चाभिधेयवत् ॥ १५८ ॥
विकृतं त्रिषु बाभत्सरागिते संस्कृतेऽपि च ।
विच्छित्तिरङ्गरागे विच्छेदे हारभेदे स्त्री ॥ १५९ ॥

विदितं बुधितार्थितयोर्विपत्तिरपि यातनाऽऽपदोर्योषित् ।
वृत्तान्तः प्रक्रियायां स्यात् कात्स्न्यैवार्त्ताप्रभेदयोः ॥ १६० ॥
प्रस्तावे वेष्टितं रुद्धे लासके करणान्तरे ।
वेल्लितं गमने क्लीबं कुटिले विधुते त्रिषु ॥ १६१ ॥
(१)विवर्त्तः समुदाये स्यादपवर्तननृत्ययोः ।
शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः ॥ १६२ ॥
श्रीमांस्तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु ।
श्रीपतिः पुंसि पृथिवीनाथे च मधुसूदने ॥ १६३ ॥
शुद्धान्तोऽन्तःपुरे क्ष्माभृद्रहःकक्षान्तरेऽपि च ।
स्रवन्ती तु तरङ्गिण्यां गुल्मस्थानौषधीभिदोः ॥ १६४ ॥
संवर्त्तः प्रलये मुन्यन्तरे कर्षफलेऽपि च ।
स्खलितं चलिते भ्रेषे संहतं सङ्गते दृढे ॥ १६५ ॥
संस्कृतः कृत्रिमे शस्ते भूषितेऽष्वन्यलिङ्गकः ।
क्लीबं तु लक्षणोपेते स्थपतिः कञ्चुकिन्यपि ॥ १६६ ॥
जीवेष्टियाजके शिल्पभेदे ना सत्तमे त्रिषु ।
सङ्घातः पुंसि घाते च संहतौ नरकान्तरे ॥ १६७ ॥
संवित्तिः प्रतिपत्तौ स्यादविवादे जनस्य च ।
सन्ततिः स्यात् पंक्तौ गोत्रे पारम्पर्यं च पुत्रयोः ॥ १६८ ॥
(२)सङ्गतिः सङ्गमे ज्ञाने सन्नतिः प्रणतौ ध्वनौ ।
समितिः सम्पराये स्यात्सभायां सङ्गमेऽपि च ॥ १६९ ॥
समाप्तिरवसाने स्यात्समर्थनेऽथ सम्मतिः ।
अभिलाषेऽप्यनुज्ञायां संवित्याद्यास्तु योषिति ॥ १७० ॥
स्थापितं निश्चिते न्यस्ते (३)स्तिमितोऽचञ्चलार्द्रयोः ।
सिकता स्त्री सिकतिले वालुकायां तु भूमनि ॥ १७१ ॥
सुरतं स्यात्त्रिभुवने देवत्वे सुरता स्मृता ।

(१) इदमर्धं नास्ति-ख. । (२) इदमर्धं पद्यं नास्ति-ख. ।
(३) निश्चला-ख. ।

सुकृतं तु शुभे पुण्ये क्लीबं सुविहिते त्रिपु ॥ १७२ ॥
सुव्रता सुखसन्दोह्याशोभनव्रतयोरपि ।
सुनीतिः शोभननये ध्रुवमातरि योषिति ॥ १७३ ॥
सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि ।
हरिर्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः ॥ १७४ ॥
अस्त्रियां स्यात्तृणे चाथ हर्मितं क्षिप्तदग्धयोः ।
हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत् ॥ १७५ ॥
हसन्त्यङ्गारधान्यां च मल्लिकाशाकिनीभिदोः ।
हारीतः पक्षिभेदे स्यान्मुनिभेदे च कैतवे ॥ १७६ ॥
हृषितं विस्मिते प्रीते प्रहृते हृष्टलोमनि ।

( तचतुष्कम् )

अवसितमृद्धे ज्ञातेऽप्यवसानगते च वाच्यलिङ्गं स्यात् ॥१७७॥
(१)अर्थपतिः पुंलिङ्गो धनाधिनाथे च नरनाथे ।
अवदातः सिते गौरे विशुद्धेऽप्यन्यलिङ्गकः ॥ १७८ ॥
अवगीतं तु निर्वादे दु(२)ष्टगर्हितयोरपि ।
अन्तर्गतं विस्मृते स्यान्मध्यप्राप्ते च वाच्यवत् ॥ १७९ ॥
अङ्गारितं तु दग्धे स्यात्पलाशकलिकोद्गमे ।
(३)हसन्त्यां च लतामात्रे नदीभेदे च योषिति ॥ १८० ॥
अपावृतस्तु पिहिते स्वतन्त्रेऽपि च वाच्यवत् ।
अत्याहितं महाभीतौ जीवानपेक्षिकर्मणि ॥ १८१ ॥
अभिनीतं त्रिपु न्याय्ये संस्कृतामर्षिणोरपि ।
अभिजातः कुलीने स्यात् न्याय्यपण्डितयोस्त्रिपु ॥ १८२ ॥
अभियुक्तः परै रुद्धे तत्परेऽप्यभिधेयवत् ।
अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च ॥ १८३ ॥
अवध्वस्तः परित्यक्ते निन्दितेऽप्यवचूर्णिते ।

( १ ) इदमर्धं नास्ति-क. पु. । ( २ ) खण्ड-क. ।
( ३ ) इदमर्धं नास्ति-ख. ।

अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु ॥ १८४ ॥
अंशुमान् भास्करे शालपर्ण्यामंशुमती स्मृता ।
भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु ॥ १८५ ॥
अथानुमतिरूनेन्दुपूर्णिमाऽनुज्ञयोरपि ।
अभिशस्तिः प्रार्थनाऽपवादयोश्च त्रयं स्त्रियाम् ॥ १८६ ॥
आयुष्मान् योगभेदे ना वाच्यवच्चिरजीविनि ।
उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु ॥ १८७ ॥
उपाकृतोऽध्वरहतपशौ नोपद्रुते त्रिषु ।
उदास्थितः प्रतीहारे प्रव्रज्याऽवसिते चरे ॥ १८८ ॥
स्यादुल्लिखितमुत्कीर्णे तनूकृते च वाच्यवत् ।
उद्ग्राहितमुदीर्णे स्याद्बद्धग्राहितयास्त्रिषु ॥ १८९ ॥
भवेदुपचितं दग्धे समृद्धे वाच्यलिङ्गकम् ।
उज्जृम्भितं त्रिषूत्फुल्ले चेष्टायां तु नपुंसकम् ॥ १९० ॥
उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः ।
उपसत्तिः सङ्गमात्रे सेवायामपि योषिति ॥ १९१ ॥
ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिबिषु ।
ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे ॥ १९२ ॥
नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् ।
नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने ॥ १९३ ॥
कलधौतं सुवर्णे स्याद्रजते च नपुंसकम् ।
भवेत् कुहरितं क्लीबं पिकालापे रतध्वनौ ॥ १९४ ॥
कुमुद्वान् कुमुदप्रायदेशे स्याद्वाच्यलिङ्गकः ।
कुमुद्वती कुमुदिन्यां कुशपत्न्यां च योषिति ॥ १९५ ॥
कृष्णवृन्ता पाटलायां माषपर्ण्यां च योषिति ।
अथ गन्धवती पृथ्वीपुरीभिद्व्यासमातृषु ॥ १९६ ॥
सुरायां च गरुत्मांश्च पक्षिमात्रे खगाधिपे ।
भवेद् गृहपतिः पुंसि गृहस्थेऽपि च मन्त्रिणि ॥ १९७ ॥
चन्द्रकान्तस्तु पुंसि स्यान्मणिभेदे च कैरवे ।

चर्मण्वती नदीभेदे कदलीपादपे स्त्रियाम् ॥ १९८ ॥
चित्रगुप्तस्तु पुंसि स्याद्यमे तस्य च लेखके ।
दिवाभीतः कुम्भिले स्यादुलूके कुमुदाकरे ॥ १९९ ॥
दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनोः ।
द्वीपवान् सिन्धुनद्योर्द्वीपवत्यापगाभुवोः ॥ २२० ॥
दृषद्वती नदीभेदे कात्यायन्यामपि स्त्रियाम् ।
स्याद् धूमकेतुरुत्पातभेदे वैश्वानरे पुमान् ॥ ॥ २०१ ॥
नन्द्यावर्तः पुमान् वेश्मप्रभेदे भगवद्द्रुमे ।
नदीकान्तः समुद्रे स्याद् हिज्जले सिन्दुवारके ॥ २०२ ॥
नदीकान्ता स्त्रियां जम्ब्वां काकजङ्घौषधावपि ।
नागदन्तो द्विपरदे गृहान्निर्गतदारुणि ॥ २०३ ॥
नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपि स्त्रियाम् ।
निष्कासितो निर्गमितेऽप्याहितेऽधिकृतेऽपि च ॥ २०४ ॥
अथ निस्तुषितं त्यक्ते त्वग्निर्हीने लघूकृते ।
निराकृतिरनाकारेऽस्वाध्याये त्रिषु वारणे ॥ २०५ ॥
स्त्रियां परिगतं प्राप्ते विस्मृतज्ञानचेष्टिते ।
अथ प्रणिहितं न्यस्ते प्राप्तेऽपि च समाहिते ॥ २०६ ॥
अथ पल्लवितं लाक्षारक्ते सपल्लवे तते ।
भवेत् प्रतिहितं द्विष्टे प्रतिस्खलितरुद्धयोः ॥ २०७ ॥
प्रतीक्षमं वारिते स्यात्प्रेषिते पञ्चकं त्रिषु ।
परिवर्तो विनियमे कूर्मराजेऽपवर्तने ॥ २०८ ॥
परिस्रुता स्त्री वारुण्यां स्यन्ने स्यादभिधेयवत् ।
प्रधूपिता क्लेशितायां सूर्यगन्तव्यदिश्यपि ॥ २०९ ॥
पञ्चगुप्तस्तु चार्वाकदर्शने कमठे पुमान् ।
प्रजापतिश्च दक्षादौ महीपाले विधातरि ॥ २१० ॥
प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च ।
सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति ॥ २११ ॥
अथ प्रव्रजिता मांसीमुण्डीरीतापसीषु च ।

प्रतिकृतिरथार्चायां प्रतिनिधिप्रतीकारयोश्च स्त्री ॥ २१२ ॥
पाशुपतो वकपुष्पे स्यात् पशुपत्यधिदैवते च तद्भक्ते ।
पारिजातः सुरतरौ पारिभद्रतरावपि ॥ २१३ ॥
पारावती गोपगीते नदीभिल्लवलीफले ।
पारावतः कलरवे तथा मर्कटतिन्दुके ॥ २१४ ॥
पुष्पदन्तस्तु दिङ्नागभेदे विद्याधरान्तरे ।
पुरस्कृतोऽभिशस्तारिग्रस्ताग्रे कृतपूजिते ॥ २१५ ॥
भगवान्ना जिने गौर्यां स्त्रियां पूज्ये तु वाच्यवत् ।
अथ भोगवती नागपुरीनद्योर्गहौ पुमान् ॥ २१६ ॥
रङ्गमाता तु कुट्टन्यां वृक्षरोगान्तरे स्त्रियाम्(१) ।
लक्ष्मीपतिः पुमान् वासुदेवे नरपतावपि ॥ २१७ ॥
व्यतीपातो महोत्पाते योगभेदापमानयोः ।
वनस्पतिर्ना द्रुमात्रे विना पुष्पफलद्रुमे ॥ २१८ ॥
विनिपातो निपाते स्याद् दैवादिव्यसने पुमान् ।
विजृम्भितं तु चेष्टायां क्लीबं त्रिषु विकस्वरे ॥ २१९ ॥
विवस्वान् विबुधे(२) सूर्ये तन्नगर्यां विवस्वती ।
वैजयन्तो महेन्द्रस्य ध्वजप्रासादयोः पुमान् ॥ २२० ॥
वैजयन्ती पताकायां जयन्तीपादपे (३)स्त्रियाम् ।
भवेच्छतधृतिः पुंसि शक्रे च परमेष्ठिनि ॥ २२१ ॥
शुभ्रदन्ती सुदन्त्यां स्यात् पुष्पदन्तेभयोषिति ।
समुद्धतं समुत्कीर्णेऽप्यपनीते च वाच्यवत् ॥ २२२ ॥
सदागतिर्नाकवातनिर्वाणेषु सदीश्वरे ।
सरस्वांश्च नदे चाब्धौ मान्यवद्रसिके स्त्रियाम् ॥ २२३ ॥
वाणी स्त्री रत्नवाग्देवीगोनदीषु नदीभिदि ।
मनुपत्न्यामपि सत्यवती व्यासस्य मातरि ॥ २२४ ॥
नारदर्षीकयाः पत्न्यां स्त्रियां पुंसि नृपान्तरे ।

---

( १ ) पुमान्-ख. । ( २ ) विवस्वांतु सुरे सूर्ये-ख. । ( ३ ) पुमान्-क. ।

समुद्रान्ता तु कार्पासीपृक्कादुरालभासु च ॥ २२५ ॥
समाहितः समाधिस्थेऽप्युक्तसिद्धान्त आहिते ।
निर्विवादीकृतेऽपि स्यात्प्रतिज्ञाते च वाच्यवत् ॥ २२६ ॥
समाघातो वधे युद्धे संख्यावान् पण्डिते पुमान् ।
संख्यायुक्तेऽन्यलिङ्गोऽथ सुधासूतिः पुमान् मखे ॥ २२७ ॥
चन्द्रे सुभाषितो बुद्धे पुमान् सूक्ते नपुंसकम् ।
सूर्यभक्तस्तु बन्धूके पुंसि त्रिष्वर्कपूजके ॥ २२८ ॥
सेनापतिः कार्तिकेयेऽप्यनीकाधिपतौ पुमान् ।
हिमारातिः पुमान् वीतिहोत्रे किरणमालिनि ॥ २२९ ॥
हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयाः ।

( तपञ्चकम् )

अवलोकितो ना लोकनाथे त्रिषु निरीक्षिते ॥ २३० ॥
अपराजित ईशाजेष्ट्यन्तरे नाऽजिते त्रिषु ।
गिरिकर्णीजयादुर्गाशनपर्णीषु योषिति ॥ २३१ ॥
उपधूपित आसन्नमरणे परिधूपिते ।
स्याद्गणाधिपतिः पुंसि शङ्करेऽपि गजानने ॥ २३२ ॥
भवेत् पिपतिषन् पित्सौ त्रिषु पुंसि विहङ्गमे ।
पृथिवीपतिस्तु भूपे ऋषभाख्यौषधौ पुमान् ॥ २३३ ॥
मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च ।
यादसाम्पतिरम्भोधौ पश्चिमाशापतावपि ॥ २३४ ॥
वसन्तदूतश्चैत्रे स्यात् पिकपञ्चमरागयोः ।
वसन्तदूती पाटल्यामभियुक्ते च योषिति ॥ २३५ ॥

( तषट्कम् )

अर्धपारावतश्चित्रकण्ठे तित्तिरिपक्षिणि ।

( तसप्तकम् )

समुद्रनवनीतं स्यात् क्लीबं पीयूषचन्द्रयोः ॥ २३६ ॥

इति तान्तवर्गः ।

---

( थैकम् । )

थं रक्षणे मङ्गले च साध्वसे च नपुंसकम् ।
शिलोच्चये पुमानेव क्वचित्तु भयरक्षके ॥ १ ॥

( थद्विकम् )

अर्थो विषयार्थनयोर्धनकारणवस्तुषु ।
अभिधेये च शब्दानां निवृत्तौ च प्रयोजने ॥ २ ॥
आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति ।
कन्था मृण्मयभित्तौ च तथा प्रावरणान्तरे ॥ ३ ॥
क्वथः स्यादतिदुःखेऽपि निष्पाकेऽपि द्रवस्य च ।
कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि ॥ ४ ॥
कोथो ना नेत्ररोगस्य भेदे च शठिते त्रिषु ।
ग्रन्थो ग्रन्थनाधनयोः स्याच्छास्त्राक्षरसंख्ययोः ॥ ५ ॥
ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः ।
गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः ॥ ६ ॥
तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च ।
अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥ ७ ॥
तुत्थमञ्जनभेदे स्यान्नीलसूक्ष्मैलयोस्त्रियाम् ।
दुःस्थः स्याद् दुर्गते मूर्खे दुःखेन तिष्ठति त्रिषु ॥ ८ ॥
प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि ।
पाथोऽर्केऽग्नौ जले क्लीबं पृथुः स्यान्महति त्रिषु ॥ ९ ॥
त्वक्पर्ण्यां कृष्णजीरे स्त्री पुमानग्नौ नृपान्तरे ।
प्रोथोऽस्त्री हयघोणायां नाकट्यामध्वगे त्रिषु ॥ १० ॥
मन्थः स्यात्पुंसि मन्थाने सक्तवे च दिवाकरे ।
यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति ॥ ११ ॥
रथः पुमानवयवे स्यन्दने वेतसेऽपि च ।
वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः ॥ १२ ॥
संस्थश्चरेऽवस्थिते स्त्री स्थितौ सादृश्यनाशयोः ।
सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके ॥ १३ ॥

सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् ।

( थत्रिकम् )

अतिथिः कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु ॥ १४ ॥
अश्वत्थः पिप्पलद्रौ स्यादश्वत्था पूर्णिमातिथौ ।
अव्यथो निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम् ॥ १५ ॥
उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान् ।
उपस्थः शेफसि क्रोडे तथा मदनमन्दिरे ॥ १६ ॥
उद्रथो रथकीले स्यात्ताम्रचूडाख्यपक्षिणि ।
क्षवथुर्ना क्षुते कासे कायस्थः परमात्मनि ॥ १७ ॥
नरजातिविशेषे ना हरीतक्यां तु योषिति ।
कापथः कुत्सितपथे उशीरे क्लीबमिष्यते ॥ १८ ॥
गाग्रन्थिर्ना करीषे स्याद् गोष्ठगोजिह्विकौषधौ ।
दमथस्तु पुमान् दण्डे दामे च परिकीर्तितः ॥ १९ ॥
निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके ।
निर्ग्रन्थो नग्नकेऽपि स्यान्निःस्वबालिशयोरपि ॥ २० ॥
प्रमथा स्याद् हरीतक्यां हरपारिषदे पुमान् ।
वरूथो रथगुप्तौ स्यात् वरूथं चर्मवेश्मनोः ॥ २१ ॥
मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे ।
वयस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च ॥ २२ ॥
सूक्ष्मैलायां च काकोल्यां पथ्या(१)लीतरुणे त्रिपु ।
वमथुः पुंसि वमने गजस्य करशीकरे ॥ २३ ॥
विदथो योगिकृतिनोः शमथः शान्तिमन्त्रिणोः ।
षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान् ॥ २४ ॥
समर्थस्तु हिते शक्ते सम्बद्धेऽप्यन्यलिङ्गकः ।
सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे ॥ २५ ॥

( १ ) पथ्यायां तरुणे त्रिषु–ख. ।

( थचतुष्कम् )

अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे ।
राजरक्षिणि चिन्हे च वीरमर्दनकेऽपि च ॥ ६२ ॥
भवेदितिकथाऽपार्थवाच्यश्रद्धेयनष्टयोः ।
चतुष्पथं चतुर्मार्गे सङ्गमे ब्राह्मणेऽपि ना ॥ २७ ॥
अथ चित्ररथः सूर्यगन्धर्वान्तरयोः पुमान् ।
दशमीस्थो नष्टवीर्ये स्थविरेऽप्यन्यलिङ्गकः ॥ २८ ॥
प्राणनाथो यमे ना स्यादिष्टे प्राणाधिके मतः ।
वानप्रस्थो मधूकेऽपि स्यात् तृतीयाश्रमे पुमान् ॥ २९ ॥
भवेदुदरथिः पुंसि समुद्रे च वियन्मणौ ।

## इति थान्तवर्गः ।

---

( दैकम् )

दः पुमानचले दत्ते स्त्रियां शोधनदानयोः ।
छेदोपतापरक्षासु पुमांस्तु दातरि स्मृतः ॥ १ ॥

( दद्विकम् )

अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान् ।
अन्दुः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च ॥ २ ॥
कन्दोऽस्त्री सूरणे शस्यमूले जलधरे पुमान् ।
कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिद्ध्यन्तरेषु ना ॥ ३ ॥
क्षोदः स्यात्पुंसि रजसि पेषणे च प्रकीर्तितः ।
गदो भ्रातरि विष्णोः स्यादामये ना युधे गदा ॥ ४ ॥
छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः ।
छन्दो वशेऽप्यभिप्राये धीदा पुत्रीमनीषयोः ॥ ५ ॥
नन्दिर्द्यूताङ्ग आनन्देऽस्त्री नन्दिकेश्वरे पुमान् ।
नदी सरिति शोणादौ ना नन्दा स्यादलिञ्जरे ॥ ६ ॥

गौर्या तिथिविशेषे स्त्री निधिराजभिदोः पुमान् ।
निन्दा स्यादपवादेऽपि कुत्सायामपि योषिति ॥ ७ ॥
पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः ।
पादतच्चिन्हयोः स्थानत्राणयोरङ्कवस्तुनोः ॥ ८ ॥
श्लोकपादेऽपि च क्लीबं पुंलिङ्गः किरणे पुनः ।
पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्वते ॥ ९ ॥
चरणे च मयूखे च वन्दा लतान्तरे स्मृता ।
भिक्षुक्यामपि वन्द्यां च विन्दुर्दन्तक्षतान्तरे ॥ १० ॥
भ्रुवोर्मध्ये रूपकार्यप्रकृतौ पृषते पुमान् ।
वेदितर्यन्यलिङ्गः स्यात् भद्रं कल्याणशर्मणोः ॥ ११ ॥
भेदो द्वैधे विशेषे स्यादुपजापे विदारणे ।
मदो रेतसि कस्तूर्यां गर्वे हर्षमदानयोः ॥ १२ ॥
मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः ।
अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ ॥ १३ ॥
मृदुः स्यात्कोमलेऽतीक्ष्णे रदो दन्ते विलेखने ।
विदा ज्ञाने च निर्दिष्टा मनीषायां च योषिति ॥ १४ ॥
वेदः श्रुतौ च वृत्ते च वेदिः स्यात्पण्डिते पुमान् ।
स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले ॥ १५ ॥
शादः स्यात्कर्दमे शष्पे स्वादुर्मिष्टमनोज्ञयोः ।
सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे ॥ १६ ॥
स्वेदस्तु स्वेदने घर्मे हृत् क्लीबं बुक्कचित्तयोः ।

( दत्रिकम् )

अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् ॥ १७ ॥
अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति ।
अर्द्धेन्दुरर्द्धचन्द्रे स्याद्गलहस्तनखाङ्कयोः ॥ १८ ॥
अर्द्धेन्दुः स्यादतिप्रौढस्त्रीयोन्यङ्गुलियोजने ।
(१)अर्बुदो मांसकीले स्यात्पुरुषे दशकोटिषु ॥ १९ ॥

( १ ) अर्बुदो मांसपुरुषे दशकोटिषु न स्त्रियाम्—ख. ।

महीधरविशेषे नाऽथास्पदं पदकृत्ययोः ।
आसन्दो वासुदेवे स्यात् खट्वाभेदे च योषिति ॥ २० ॥
आक्रन्दः क्रन्दने ह्वाने मित्रदारुणयुद्धयोः ।
भ्रातर्यपि च पुंसि स्यादामोदो गन्धहर्षयोः ॥ २१ ॥
ककुद् स्त्री ककुदोऽप्यस्त्री वृषाङ्के राड्ध्वजे वरे ।
क्षणदो गणके रात्रौ क्षणदा क्षणदञ्जले ॥ २२ ॥
कपर्दः खण्डपरशौ जटाजूटे वराटके ।
कर्णान्दुरुत्क्षिप्तिकायां कर्णपाल्यामपि स्त्रियाम् ॥ २३ ॥
क्रव्यादृक्षसि पुंसि स्यान्मांसाशिन्यन्यलिङ्गकः ।
कामदा कामधेनौ स्त्री कामदातरि वाच्यवत् ॥ २४ ॥
कुमुद् त्रिषु स्यात्कृपणे कैरवे तु नपुंसकम् ।
कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ ॥ २५ ॥
गाम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे ।
कुसीदं जीवने वृद्ध्या क्लीवं त्रिषु कुसीदके ॥ २६ ॥
कौमुदः स्यात्कार्तिकिके चन्द्रिकायां तु कौमुदी ।
गोष्पदं गोपदश्वभ्रे गवाञ्च गतिगोचरे ॥ २७ ॥
गोविन्दो वासुदेवे स्याद् गवाध्यक्षे बृहस्पतौ ।
गोनर्दमपि कैवर्तीमुस्तके पुंसि सारसे ॥ २८ ॥
जलदो मुस्तके मेघे जीवदो वैद्यविद्विषोः ।
तरद् स्त्रियां प्लवेऽपि स्यात् कारण्डे च विहङ्गमे ॥ २९ ॥
तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम् ।
दरद् स्त्रियां प्रपातेऽपि भयपर्वतयोरपि ॥ ३० ॥
दारदो विषभेदे स्यात्पारदे हिङ्गुले पुमान् ।
दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च ॥ ३१ ॥
दृषद् निष्पेषणशिलापट्टप्रस्तरयोः पुमान् ।
धनदस्तु कुबेरे स्यात्पुंलिङ्गो दातरि त्रिषु ॥ ३२ ॥
नलदं स्यात्पुष्परसोशीरमांसीषु न द्वयोः ।
नर्मदः केलिसचिवे नर्मदा सरिदन्तरे ॥ ३३ ॥

निर्वादः स्याल्लोकवादे परिनिष्ठितवाद्योः ।
निषादः स्वरभेदे स्याच्चण्डाले धीवरान्तरे ॥ ३४ ॥
प्रमदः सम्मदे मत्ते स्त्रियामुत्तमयोषिति ।
प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु ॥ ३५ ॥
प्रणादस्तु पुमांस्तारशब्दे च श्रवणामये ।
प्रासादो देवनृपयोर्गृहेऽथ वरदा स्त्रियाम् ॥ ३६ ॥
कन्यायां वाच्यलिङ्गस्तु प्रसन्ने च समर्द्धके ।
भसद् स्त्री भास्वरे योनौ मर्यादा सीमनि स्थितौ ॥ ३७ ॥
माकन्दः सहकारेऽस्त्री धात्रीनगरभेदयोः ।
मुकुन्दो निधिभिद्विष्णुरत्नभेदे च कुन्दुरौ ॥ ३८ ॥
मेनादस्तु पुमान् केकिमार्जारच्छागलेषु च ।
विशदः पाण्डुरे रक्ते शरद् स्त्री वत्सरेऽप्यृतौ ॥ ३९ ॥
शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः ।
शस्ये क्लीवं शरज्जातनूतनाप्रतिभे त्रिषु ॥ ४० ॥
षड्बिन्दुः स्यात्कीटभेदपुण्डरीकाक्षयोः पुमान् ।
सम्पद् भूतौ गुणोत्कर्षे हारभेदेऽपि च स्त्रियाम् ॥ ४१ ॥
संविद् स्त्रियां प्रतिज्ञायामाचारज्ञानसङ्गरे ।
सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोषणे ॥ ४२ ॥
सम्भेदः स्फुटने सङ्गे सुनन्दा रोचनोमयोः ।

( दचतुष्कम् )

अभिष्यन्दोऽतिवृद्धौ स्यादास्रावेऽक्षिगदेऽपि च ॥ ४३ ॥
अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च ।
अष्टापदी चन्द्रमल्लयां शरभे मर्कटे पुमान् ॥ ४४ ॥
अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि ।
अभिमर्दस्तु पुंसि स्यादवमर्दे सम्पराये च ॥ ४५ ॥
एकपदं तत्काले नपुंसकं वर्त्मनि स्त्री स्यात् ।
कटुकन्दः पुमान् शिग्रौ शृङ्गवेररसोनयोः ॥ ४६ ॥
कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान् ।

अथ कोकनदं रक्तकुमुदे रक्तपङ्कजे ॥ ४७ ॥
चतुष्पदी तु पद्ये ना पशौ च करणान्तरे ।
भवेज्जनपदो जानपदोऽपि जनदेशयोः ॥ ४८ ॥
तमोनुदग्नीन्दुर्के ना प्रतिपद्द्वा तिथौ मतौ ।
परिवादोऽपवादे स्याद्वीणावादनवस्तुनि ॥ ४९ ॥
प्रियंवदः खेचरे ना प्रियवाचि तु वाच्यवत् ।
पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेऽपि च ॥ ५० ॥
पुटभेदो नदीवक्र पतनातोद्ययोरपि ।
महानादः कुञ्जरे स्याद् वर्षुकाब्दे महास्वने ॥ ५१ ॥
मुचुकुन्दो वृक्षभेदे मान्धातृतनयेऽपि च ।
मेघनादस्तु वरुणे तनये रावणस्य च ॥ ५२ ॥
विशारदः पण्डिते च धृष्टे विष्णुपदं तु खे ।
क्षीरोदे च स्त्रियां गङ्गारविसङ्क्रान्तिभेदयोः ॥ ५३ ॥
शशबिन्दुः पुमान्वासुदेवे राजान्तरेऽपि च ।
शतानन्दो मुनेर्भेदे देवकीनन्दनेऽपि च ॥ ५४ ॥
शतह्रदा स्त्रियां वज्रे सौदामिन्यां च कीर्तिता ।
समर्यादः समीपे ना मर्यादासहिते त्रिषु ॥ ५५ ॥

( दपञ्चकम् )

भवेदुपनिषद् धर्मे वेदान्ते विजने स्त्रियाम् ।
सहस्रपादः कारुण्डे मार्तण्डे यत्नपूरुषे ॥ ५६ )

इति दान्तवर्गः ।

---

( धैकम् )

धा ना धर्मे कुबेरे च क्लीबं तु वसुनि स्मृतम् ।
धो धा च ब्रह्मणि ख्यातो धा तु स्याद् धारकेऽपि च ॥१॥
धीर्ज्ञानभेदे बुद्धौ च धूः स्मृता धूनने स्त्रियाम् ।

( धद्विकम् )

अर्द्धं समांशे खण्डे नाऽब्धिर्ना सरसि वारिधौ ॥ २ ॥

अन्धं स्यात्तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत् ।
आधिः पुमांश्चित्तपीडाप्रत्याशाबन्धकेषु च ॥ ३ ॥
व्यसने चाप्यधिष्ठाने पीद्धमातपदीप्तयोः ।
ऋद्धं सम्पन्नधान्ये च सुसमृद्धे च वाच्यवत् ॥ ४ ॥
ऋद्धिः स्यादौषधीभेदे समृद्धावपि योषिति ।
गन्धः प्रतिवेश्यामोदलेशसम्बन्धगन्धके ॥ ५ ॥
गाधः स्थाने च लिप्सायां गोधा तलनिहाकयोः ।
दधि क्षीरोत्तरा(१)वस्थाभावे श्रीवासस(२)र्जयोः ॥ ६ ॥
दग्धं प्लुष्टेऽन्यलिङ्गं स्यात् स्थिताकर्दिशि च स्त्रियाम् ।
दिग्धा विषाक्तबाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गकः ॥ ७ ॥
दुग्धं प्रपूरिते क्षीरे दुग्धी क्षीराविकौषधौ ।
दोग्धाऽर्थोपजीविकवौ वत्सगोपालयोः पुमान् ॥ ८ ॥
नद्धो बद्धे तथोद्वृत्ते बन्ध आधौ च बन्धने ।
बन्धुः स्यात्पुंसि बन्धूके मित्रे भ्रातरि बान्धवे ॥ ९ ॥
बाधा दुःखे निषेधे च बुधः सौम्ये च पण्डिते ।
बुद्धो जिने लब्धवर्णे पुंसि स्याद्बुधितेऽन्यवत् ॥ १० ॥
बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे ।
मधुपुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे ॥ ११ ॥
वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति ।
मिद्धं चित्ताभिसङ्क्षेपे क्लीबमालस्यनिद्रयोः ॥ १२ ॥
मुग्धस्तु सुन्दरे मूढे मेधा बुधौ क्रतौ पुमान् ।
राधो मासान्तरे राधा चित्रभेदे च धन्विनाम् ॥ १३ ॥
गोपीविशाखामलकीविष्णुकान्तासु विद्युति ।
लुब्ध आकाङ्क्षिणि व्याधे वधूः स्त्री शारिवौषधौ ॥ १४ ॥
स्नुषाशटीनवोढासु चार्यापृक्काङ्गनासु च ।
व्याधिः कुष्ठे च रोगे ना व्याधो मृगयुदुष्टयोः ॥ १५ ॥

( १ ) क्षीरान्तरावस्था०-ख. । ( २ ) श्रीवासवासयोः-ख. ।

तारामयेशे च विधुर्ना कर्पूरेन्दुविष्णुषु ।
विद्धं स्याद्वेधिते क्षिप्ते सदृशे बाधिते त्रिषु ॥ १६ ॥
विधिर्ना नियतौ काले विधाने परमेष्ठिनि ।
विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ ॥ १७ ॥
वृद्धो जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीबं तु शैलजे ।
वृद्धिस्तु वर्द्धने योगेऽप्यष्टवर्गौषधान्तरे ॥ १८ ॥
कालान्तरे चाभ्युदये समृद्धावपि योषिति ।
श्रद्धाऽऽदरे च काङ्क्षायां श्राद्धं श्रद्धाऽन्विते त्रिषु ॥ १९ ॥
हव्यकव्यविधौ क्लीबं शुद्धं स्यात्त्रिषु केवले ।
निर्दोषे च पवित्रे च सन्धा स्थितिप्रतिज्ञयोः ॥ २० ॥
स्पर्द्धा संहर्षणेऽपि स्यात्साम्ये क्रमसमुन्नतौ ।
सन्धिः पुमान् सुरुङ्गायां भगे सङ्घटनेऽपि च ॥ २१ ॥
रूपकाणां मुखाद्यङ्गे सावकाशेऽपि कीर्तितः ।
स्कन्धः स्यान्नृपतावंसे सम्परायसमूहयोः ॥ २२ ॥
कायें तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि ।
साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत् ॥ २३ ॥
सिद्धो ना व्यासादौ भेदे योगस्य देवयोनेश्च ।
त्रिषु निष्पन्ने स्निग्धं स्नेहयुते चिक्कणेऽपि स्यात् ॥२४॥
सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम् ।
सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्द्धिवृद्धिषु ॥ २५ ॥
सुधा स्त्री लेपने मूर्व्यां स्नुहीगङ्गेष्टकामृते ।

( धत्रिकम् )

अवधिस्त्ववधाने स्यात्सीम्नि काले बिले पुमान् ॥ २६ ॥
अगाधमतलस्पर्शे त्रिषु श्वभ्रे नपुंसकम् ।
आनद्धं मुरजादौ च क्लीबं स्यात्सन्दिते त्रिषु ॥ २७ ॥
आविद्धो वाच्यलिङ्गः स्यात्कुटिले च पराहतम् ।
आबद्धो दृढबन्धे स्यात्प्रेमालङ्कारयोक्त्रयोः ॥ २८ ॥
उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संहननेऽपि च ।

उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृते छले ॥ २९ ॥
विशेषणे पुंस्युपधिः पुंसि व्याजरथाङ्गयोः ।
कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्धकलेवरे ॥ ३० ॥
क्लीबं जले पुंस्युदरे बाहुरक्षोविशेषयोः ।
दुर्विधो वाच्यलिङ्गः स्याद् दुर्गतेऽपि खलेऽपि च ॥ ३१ ॥
न्यग्रोधस्तु पुमान् व्यामवटयोश्च शमीतरौ ।
न्यग्रोधी वृषचित्रायां निरोधो नाशरोधयोः ॥ ३२ ॥
निषधः कठिने देशे तद्राजे पर्वतान्तरे ।
परिधिर्ना यज्ञियद्रुशाखायामुपसूर्यके ॥ ३३ ॥
प्रसिद्धो भूषिते ख्याते प्रणिधिर्नाऽर्थने चरे ।
मागधी स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे ॥ ३४ ॥
पुंसि वैश्यात् क्षत्रियाजे शुक्लजीरकबन्दिनोः ।
विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः ॥ ३५ ॥
विश्रब्धोऽनुद्धटेऽपि स्याद् गाढविश्वस्तयोस्त्रिषु ।
विबुधो ज्ञे सुरे वीरुध् लताविटपयोः स्त्रियाम् ॥ ३६ ॥
सन्नद्धो वर्मिते व्यूढे सम्बाधः सङ्कटे भगे ।
सन्निधिः सन्निधानेऽपि पुमानिन्द्रियगोचरे ॥ ३७ ॥
संसिद्धिः प्रकृतौ सिद्धौ मदोग्रायामपि स्त्रियाम् ।
सम्बोधो बोधने क्षेपे समाधिर्ना समर्थने ॥ ३८ ॥
ध्याननीवाकनियमे काव्यस्य च गुणान्तरे ।
(१)सुगन्धिः स्यादिष्टगन्धे त्रिषु क्लीबं तु वालुके ॥ ३९ ॥

( धचतुष्कम् )

अवरोधस्तिरोधाने राजदारेषु तद्गृहे ।
अवष्टब्धो विदूरे स्यादाक्रान्ते चावलम्बिते ॥ ४० ॥
अनुबन्धस्तु बन्धे स्याद्दोषोत्पादे विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्त्तने ॥ ४१ ॥

( १ ) इदमर्धं नास्ति क. ।

अनुबन्धी तु हिक्कायां तृष्णायामपि योषिति ।
अनिरुद्ध उषानाथे पुंसि (१)चाबन्धनेऽन्यवत् ॥ ४२ ॥
आशाबन्धः समाश्वासे पुंसि मर्कटजालके ।
इष्टगन्धः सुगन्धौ स्यात् त्रिषु क्लीबं तु बालुके ॥ ४३ ॥
इक्षुगन्धा कोकिलाक्षे क्रोष्टयां काशे च गोक्षुरे ।
उपलब्धिर्मितौ प्राप्तावपि ज्ञाने च योषिति ॥ ४४ ॥
उग्रगन्धाऽजमोदायां वचायां छिक्किकौषधौ ।
कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे ॥ ४५ ॥
तीक्ष्णगन्धा वचाराजिकयोः शोभाञ्जने पुमान् ।
तृणगोधा चित्रकोले कृकलासेऽपि योषिति ॥ ४६ ॥
पारिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले ।
ब्रह्मबन्धुरधिक्षिप्ते निर्देशे ब्राह्मणस्य ना ॥ ४७ ॥
महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च ।
समुन्नद्धः समुद्भूते पण्डितम्मन्यगर्विते ॥ ४८ ॥

( धपञ्चकम् )

योजनगन्धा कस्तूर्यां सितायां व्यासमातरि ॥ ४९ ॥

इति धान्तवर्गः ।

---

( नैकम् )

नः पुमान् सुगते बन्धे हिरण्डे प्रस्तुतेऽपि च ।

( नद्विकम् )

अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान् ॥ १ ॥
अन्नं भक्ते च भुक्ते स्याद्दिनः पत्यौ नृपार्कयोः ।
उन्नं क्लिन्ने च सुरते कृत्स्नं सर्वाम्बुकृत्तिषु ॥ २ ॥
घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः ।
ना मुस्ताब्धौघदार्ढ्येषु विस्तारे लोहमुद्गरे ॥ ३ ॥

---

( १ ) चानर्गले-ख. ।

त्रिषु सान्द्रे दृढे चाथ चिन्हं लक्ष्मपताकयोः ।
चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे ॥ ४ ॥
छन्नं तु रहसि क्लीबं छादिते वाच्यलिङ्गवत् ।
छिन्नं कृत्ते त्रिलिङ्गं स्याद् गुडूच्यामपि योषिति ॥ ५ ॥
जनो लोके महर्लोकात्परलोके च पामरे ।
जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि ॥ ६ ॥
जह्नुः स्यात् पुंसि राजर्षिभेदे च मधुसूदने ।
ज्यानिर्जीर्णे च हानौ च तटिन्यामपि योषिति ॥ ७ ॥
जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिपु ।
ज्योत्स्ना चन्द्रातपेऽपि स्याज्ज्योत्स्नायुक्तनिशि स्मृता ॥ ८ ॥
ज्योत्स्नी पटोलिकायां स्याज्ज्योत्स्नायुक्तनिशि स्त्रियाम् ।
तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे ॥ ९ ॥
दानं गजमदे त्यागे पालनच्छेदशुद्धिषु ।
दानुर्दातरि विक्रान्ते दीना स्त्री मूषिकस्त्रियाम् ॥ १० ॥
वाच्यवद् दुर्गते भीते द्युम्नं वित्ते बलेऽपि च ।
धनुः पुमान् पियालद्रौ राशिभेदे शरासने ॥ ११ ॥
धनं तु गोधने वित्ते धाना भृष्टयवेऽपि च ।
धन्याकेऽभिनवोद्भिन्ने धुनी नद्यां नदे पुमान् ॥ १२ ॥
नग्नो वन्दिक्षपणयोः पुंसि त्रिपु विवाससि ।
न्यूनं गर्ह्योनयोः पानं पीतिभाजनरक्षणे ॥ १३ ॥
भानुर्ना किरणे सूर्ये भिन्नः स्यात्त्रिपु दारिते ।
सङ्गतेऽन्यत्र फुल्ले च मानश्चित्तोन्नतौ ग्रहे ॥ १४ ॥
क्लीबं प्रमाणे प्रस्थादौ मीनो राश्यन्तरे झषे ।
मुनिः पुंसि वसिष्ठादौ वङ्कसेनतरौ जिने ॥ १५ ॥
मृत्स्ना मृत्सातुवर्योः स्त्री यानं स्याद्वाहने गतौ ।
योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे ॥ १६ ॥
रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम् ।
रास्ना च स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम् ॥ १७ ॥

लग्नं राश्युदये क्लीब सक्तलज्जितयोस्त्रिषु ।
वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसकम् ॥ १८ ॥
वनं नपुंसकं नीरे निवासालयकानने ।
वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान् ॥ १९ ॥
वानं शुष्कफले शुष्कस्यूतिकर्मकटे गतौ ।
विन्नं विचारिते लब्धे बुध्नो ना मूलरुद्रयोः ॥ २० ॥
श्वा पुमान् कुक्कुरे स्यातः स्थानभेदे च वास्तुनः ।
शीनो मूर्खे चाजगरे श्येनः पक्षिणि पाण्डुरे ॥ २१ ॥
स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान् ।
सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे ॥ २२ ॥
स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे ।
स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि ॥ २३ ॥
स्नानं स्नानीयेऽभिषवे सूनं प्रसवपुष्पयोः ।
सूना पुत्र्यां वधस्थाने गलशुण्डिकयोः स्त्रियाम् ॥ २४ ॥
सूनुः पुत्रेऽनुजेऽर्के ना सूनुः किरणसूर्ययोः ।
हनुर्हट्टविलासिन्यां मृत्यावस्त्रे गदे स्त्रियाम् ॥ २५ ॥
द्वयोः कपोलावयवे हानं गर्ह्योनयोस्त्रिषु ।

( नत्रिकम् )

अञ्जनं कज्जले चार्कौ सौवीरे च रसाञ्जने ॥ २६ ॥
पुंसि ज्येष्ठादिग्गजयोरञ्जना वानरीभिदि ।
अञ्जनी लेप्यनार्यां चावनं प्रीतौ च रक्षणे ॥ २७ ॥
अयनं पथि भानोरप्युदग्दक्षिणतो गतौ ।
अपानं तु गुदे क्लीबं पुंसि स्यात्तस्य मारुते ॥ २८ ॥
असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे ।
अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता ॥ २९ ॥
अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः ।
मातुरेकसुतेऽपि स्यात् पुंलिङ्गो धवलेऽन्यवत् ॥ ३० ॥
नपुंसकं तृणे नेत्रगदे चाप्यर्जुनी गवि ।

उषायां बाहुदानद्यां कुट्टिन्यामपि च क्वचित् ॥ ३१ ॥
अम्लानो महासहायां नान्यलिङ्गस्तु निर्मले ।
अर्शोघ्नी तालमूल्यां स्यादर्शोघ्नः सूरणेऽपि च ॥ ३२ ॥
असिक्नी स्यादवृद्धान्तःपुरप्रेष्यानदीभिदोः ।
असनिः स्त्रीपुंसयोः स्याच्चञ्चलायां पवावपि ॥ ३३ ॥
अरत्निर्ना सप्रकोष्ठतताङ्गुलिकरेऽपि च ।
कफोणावप्यथालो स्यादु वृश्चिके भ्रमरे पुमान् ॥ ३४ ॥
अर्थी पुमान् याचके स्यात् सेवके च विवादिनि ।
अध्वा ना पथि संस्थाने स्यादवस्कन्दकालयोः ॥ ३५ ॥
अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः ।
आसनं द्विरदस्कन्धे पीठे यात्रानिवर्तने ॥ ३६ ॥
आसनी विपणौ स्थित्यामासनो (१)जीवकद्रुमे ।
आदानं ग्रहणेऽपि स्यादलङ्कारे च वाजिनाम् ॥ ३७ ॥
आपन्नः सविपत्तौ च प्राप्ते वाच्यवदीरितः ।
आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि ॥ ३८ ॥
धृतावपि मनीषायां शरीरब्रह्मणोरपि ।
आलानं करिणां बन्धस्तम्भे रज्जौ च न स्त्रियाम् ॥ ३९ ॥
ईशानं ज्योतिषि क्लीबं पुंलिङ्गः स्यात् त्रिलोचने ।
उत्तानमगभीरे स्यादूर्ध्वास्यशयिते त्रिषु ॥ ४० ॥
उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे ।
प्राङ्गणोद्गमहर्षेषु मलरोगेऽपि न द्वयोः ॥ ४१ ॥
उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने ।
उदानोऽप्युदरावर्ते वायुभेदे भुजङ्गमे ॥ ४२ ॥
उद्धानमुद्गते वाच्यलिङ्गं चुल्यां नपुंसकम् ।
ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम् ॥ ४३ ॥
कमनः कामुके कामेऽभिरूपेऽशोकपादपे ।

---

( १ ) जीरकद्रुमे—ख., ना तु जीरके - क. ।

कम्पनं न द्वयोः कम्पे कम्प्रे स्यादभिधेयवत् ॥ ४४ ॥
कठिनमपि निष्ठुरे स्यात्स्तब्धेऽपि त्रिषु नपुंसकं स्थाल्याम् ।
कठिनी खटिकायामपि कठिना गुडशर्करायां च ॥ ४५ ॥
क्रन्दनं रोदनेऽपि स्यादाह्वानेऽप्यथ कल्पना ।
करिणः सज्जनायां स्त्री क्लीबं लुप्तौ च कल्पने ॥ ४६ ॥
कर्त्तनं न द्वयोश्छेदे नारीणां सूत्रनिर्मितौ ।
कर्मास्त्री व्याप्यक्रिययोः कदनं मर्दपापयोः ॥ ४७ ॥
काञ्चनः काञ्चनाले स्याच्चम्पके नागकेसरे ।
उदुम्बरे च धत्तूरे हरिद्रायां च काञ्चनी ॥ ४८ ॥
क्लीबेऽब्जकेसरे हेम्नि कामिनी भीरुवन्द्ययोः ।
कामी तु कामुके चक्रवाके पारावतेऽपि च ॥ ४९ ॥
कानीनः कन्यकाजाततनये व्यासकर्णयोः ।
काकिनी पणपादेऽपि मानपादे वराटके ॥ ५० ॥
काननं विपिने गेहे परमेष्ठिमुखेऽपि च ।
कुहनं मृत्तिकाभाण्डविशेषे काचभाजने ॥ ५१ ॥
कुहना दम्भचर्यायामीर्ष्यालौ कुहनं त्रिषु ।
कृती स्यात् पण्डिते योग्ये केतनं तु निमन्त्रणे ॥ ५२ ॥
गृहे केतौ च कृत्येऽथ केशी केशवति त्रिषु ।
दैत्ये ना चौरपुष्प्यां स्त्री कौलीनं गुह्यजन्ययोः ॥ ५३ ॥
कुकर्मणि कुलीनत्वे युद्धे पश्वहिपक्षिणाम् ।
कौपीनं स्यादकार्ये च चौरगुह्यप्रदेशयोः ॥ ५४ ॥
खलिनी खलवृन्दे स्यात्तालपर्ण्यामपि स्त्रियाम् ।
खञ्जनः खञ्जरीटे स्त्री सर्षप्यां खञ्जनं गतौ ॥ ५५ ॥
खड्गी ना गण्डके मञ्जुघोषे खड्गधरे त्रिषु ।
गर्जनं निनदे कोपे गहनं कलिले त्रिषु ॥ ५६ ॥
नपुंसकं गह्वरे स्याद्दुःखकाननयोरपि ।
गन्धनमुत्साहे स्यात्प्रकाशने सूचनेऽपि हिंसायाम् ॥ ५७ ॥
ग्रामीणः शुनि काके पुंसि त्रिषु सम्भृते ग्रामैः ।

ग्रावा तु प्रस्तरे पृथ्वीधरे पुंस्यथ गृञ्जनम् ॥ ५८ ॥
विषदग्धपशोर्मांसे क्लीबं पुंसि रसोनके ।
गोस्तनो हारभेदे ना द्राक्षायां गोस्तनी स्त्रियाम् ॥ ५९ ॥
गोमी शृगाले पुंसि स्यात्त्रिषु गोमत्युपासके ।
घट्टना चलनावृत्त्योश्चन्दनी तु नदीभिदि ॥ ६० ॥
चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम् ।
चलनं भ्रमणे कम्पे कम्प्रे तु वाच्यलिङ्गकम् ॥ ६१ ॥
चलनी वस्त्रयोधिन्यां वारिभेदेऽपि च क्वचित् ।
चक्री तैलिकभित्कोककुलालाजाहिसूचके ॥ ६२ ॥
चर्मी फलकपाणौ स्याद्भूर्जे भृङ्गरिटावपि ।
चर्मकृत्तौ च फलके चेतना संविदि स्त्रियाम् ॥ ६३ ॥
वाच्यवत्प्राणयुक्तेऽथ छद्म व्याजापदेशयोः ।
छर्दनं वमने क्लीबं निम्बालम्बुषयोः पुमान् ॥ ६४ ॥
छदनं च दले पक्षे पिधाने छेदनं भिदि ।
कर्तने च जनुः पुंसि जन्तौ वैश्वानरेऽपि च ॥ ६५ ॥
जवनं तु स्यदे वेगे हये ना वेगिनि त्रिषु ।
जननी तु दयामात्रोर्जननं वंशजन्मनोः ॥ ६६ ॥
जयनं स्यात्तुरङ्गादिसन्नाहे विजयेऽपि च ।
जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपि ॥ ६७ ॥
ज्ञानी स्यात्पुंसि दैवज्ञे ज्ञानयुक्तेऽन्यलिङ्गकः ।
जीवनं वर्त्तने जीवप्राणधारणयोर्जले ॥ ६८ ॥
जीवनी जीवना चापी जीवन्तीभेदयोः क्रमात् ।
तपनोऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे ॥ ६९ ॥
तलुनः पवने यूनि युवत्यां तलुनी स्मृता ।
तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम् ॥ ७० ॥
तमोघ्नः सूर्यवह्नीन्दुबुद्धशङ्करविष्णुषु ।
त्यागी दातरि शूरेऽथ तेवनं केलिकानने ॥ ७१ ॥
क्रीडायां तेमनं त्वार्द्रीकरणे व्यञ्जनेऽपि च ।

तेजनः पुंसि वंशे स्यात्तेजनी तृणपूलके ॥ ७२ ॥
तोदनं व्यथने तोत्रे दंशनं दंशवर्मणोः ।
दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ॥ ७३ ॥
शास्त्रदर्पणयोश्चाथ दमनः पुष्पवीर(१)योः ।
दशनः शिखरे दन्ते कवचे तु नपुंसकम् ॥ ७४ ॥
दहनश्चित्रके भल्लातकेऽग्नौ दुष्टचेष्टिते ।
दृशानं ज्योतिषि क्लीबं पुंलिङ्गः स्याद्विरोचने ॥ ७५ ॥
देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि ।
देवनोऽक्षेषु पुंसि स्याद् ध्वजी तु पृथिवीधरे ॥ ७६ ॥
रथब्राह्मणयोश्चापि भुजङ्गमतुरङ्गयोः ।
धन्वी धनुर्धरेऽपि स्यादर्जुने ककुभद्रुमे ॥ ७७ ॥
धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च ।
धमनो नाऽनले भस्त्राऽधमापकक्रूरयोस्त्रिषु ॥ ७८ ॥
धमनी तु शिराहट्टविलासिन्योश्च योषिति ।
धावनं गमने शुद्धौ पृश्निपर्ण्यां तु धावनी ॥ ७९ ॥
धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः ।
नन्दनं वासवोद्याने नन्दनो हर्षके सुते ॥ ८० ॥
नन्दी हरप्रतीहारे गर्दभाण्डे वनद्रुमे ।
नन्दिन्युमायां गङ्गायां ननान्दृधेनुभेदयोः ॥ ८१ ॥
नलिनी पद्मिनीव्योमनिम्नगाकमलाकरे ।
नपुंसकं नीलिकायां न पुंसि सरसीरुहे ॥ ८२ ॥
निदानं कारणे वत्सदामादिकारणक्षये ।
निधनं स्यात्कुले नाशे प्रधनं दारणे रणे ॥ ८३ ॥
पवनं कुम्भकारस्य पाकस्थाने नपुंसकम् ।
निष्पावमरुतोः पुंसि प्रज्ञानं बुद्धिचिह्नयोः ॥ ८४ ॥
प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि ।

---

( १ ) धीरयोः- क ।

प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा ॥ ८५ ॥
पद्मिनी पद्मसङ्घाते स्त्रीविशेषे सरोरुहे ।
प्रसन्ना स्त्री सुरायां स्यात्स्वच्छसन्तुष्टयोस्त्रिषु ॥ ८६ ॥
प्रसूनो वाच्यवज्जाते क्लीबं तु फलपुष्पयोः ।
पत्री श्येने पत्ररथे काण्डद्रुरथिकाद्रिषु ॥ ८७ ॥
पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे ।
दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ॥ ८८ ॥
पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि ।
पाठीनो मीनभेदे स्यात् पाठके गुग्गुलुद्रुमे ॥ ८९ ॥
पावनं तु जले कृच्छ्रे ना व्यासे पावकेऽपि च ।
पाचनं दशमूल्यादौ प्रायश्चित्ते च नाऽनले ॥ ९० ॥
वाच्यवत्पाचयितरि हरीतक्यां तु योषिति ।
पाशो व्याधे च वरुणे पिशुनं कुङ्कुमेऽपि च ॥ ९१ ॥
कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु ।
पृक्कायां पिशुना स्त्री स्यात् पीतनं पीतदारुणि ॥ ९२ ॥
कुङ्कुमे हरिताले च पुमानाम्रातके मतः ।
पूतना तु हरीतक्यां दानवीरोगभेदयोः ॥ ९३ ॥
पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः ।
प्रेमा ना वासवे वाते प्रेमास्त्री स्नेहनर्मणोः ॥ ९४ ॥
फलिन्यग्निशिखायां च फल्यां स्त्री फलिनि त्रिषु ।
फाल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे ॥ ९५ ॥
तपस्यसंज्ञमासे तत्पूर्णिमायां तु फाल्गुनी ।
ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि ॥ ९६ ॥
ऋत्विग्यागभिदोर्विप्रे बन्धनं वधबन्धयोः ।
वन्दनी नतिजीवातुकुटीयाचनकर्मसु ॥ ९७ ॥
वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः ।
वाणिनी नर्त्तकीमत्ताविदग्धवनितासु च ॥ ९८ ॥
बुधानस्तु गुरौ विज्ञे बोधनं गन्धदीपने ।

बोधनी बोधपिप्पल्योर्भर्म स्यात् काञ्चने भृतौ ॥ ९९ ॥
भण्डनं कवचे युद्धे खलीकारेऽपि न द्वयोः ।
भट्टिनी द्विजभार्यायां नाट्योक्त्यां राजयोषिति ॥ १०० ॥
भवनं स्याद् गृहे भावे भाजनं योग्यपात्रयोः ।
भावना तु न ना ध्याने पर्यालोचेऽधिवासने ॥ १ ॥
भुवनं विष्टपेऽपि स्यात् सलिले गगने जने ।
भोगी भुजङ्गमेऽपि स्याद् ग्रामपात्रे नृपे पुमान् ॥ २ ॥
विहाय महिषीमन्यराजयोषिति भोगिनी ।
मदनः स्मरवसन्तद्रुभिद्धुस्तूरसिक्थके ॥ ३ ॥
मलनः पटवासे ना मर्दने तु नपुंसकम् ।
मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति ॥ ४ ॥
मण्डनं भूषणे क्लीबं स्यात्त्रिष्वलङ्करिष्णुनि(१) ।
मार्जनं न द्वयोर्मार्ष्टौ पुंसि स्याल्लोध्रशाखिनि ॥ ५ ॥
मालिनी मातृकावृत्तभिदोर्मालिकयोषिति ।
गौरीचम्पानगर्योश्च मन्दाकिन्यां नदीभिदि ॥ ६ ॥
मानिनी तु स्त्रियां फल्यां मानी मानवति त्रिषु ।
मिथुनं न द्वयोः राशिभेदे स्त्रीपुंसयुग्मके ॥ ७ ॥
मुण्डनं वपने त्राणे मेहनं मूत्रशिश्नयोः ।
मैथुनं सुरतेऽपि स्यात् सङ्गतेऽपि नपुंसकम् ॥ ८ ॥
यमनं बन्धने चोपरतौ क्लीबं यमे पुमान् ।
यवनो देशभेदे ना वेगिवेगाधिकाश्वयोः ॥ ९ ॥
यवान्यौषधिभेदे स्त्री वाच्यवद्वेगिनि स्मृता ।
यापनं वर्त्तने कालक्षेपे निरसनेऽपि च ॥ १० ॥

(१) इतः परं सार्धमिदं पद्यं नास्ति-क. ।
मसनं गण्डगोले स्यात्तपस्ये परमेष्ठिनि ।
महनं तार्किके रम्ये गृहे देहे जलाशये ॥
मसूनोऽस्त्री जित्वरे स्यान्मेषादौ महिषेऽपि च ।

युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि ।
युञ्जानः सारथौ विप्रे योजनं परमात्मनि ॥ ११ ॥
चतुष्कोश्यां च योगेऽथ रसनं स्वदने ध्वनौ ।
जिह्वायां तु न पुंसि स्याद्रास्नायां रसना स्त्रियाम् ॥ १२ ॥
रञ्जनो रागजनने रञ्जनं रक्तचन्दने ।
शुण्डारोचनिकानीलीमञ्जिष्ठासु च रञ्जनी ॥ १३ ॥
रजनी नलिनीरात्रिहरिद्राजतुकासु च ।
राधनं साधने प्राप्तौ राधना भाषणे स्त्रियाम् ॥ १४ ॥
राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ ।
यक्षे शक्रे च पुंसि स्याद्रागी रक्तेऽपि कामुके ॥ १५ ॥
रेचनी त्रिवृतादन्त्यो रोचनी कर्कशे स्त्रियाम् ।
रोचना रक्तकल्हारे गोपित्तवरयोषितोः ॥ १६ ॥
रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु ।
रोदनं क्रन्दनेऽस्रेऽपि दुरालभौषधौ स्त्रियाम् ॥ १७ ॥
रोही रोहितकेऽश्वत्थवटपादपयोः पुमान् ।
लङ्घनं तूपवासे स्यात् (१)क्रमणे प्लवनेऽपि च ॥ १८ ॥
ललना कामिनीनारीभेदजिह्वासु योषिति ।
लक्ष्म चिह्ने प्रधाने च लाञ्छनं नामचिह्नयोः ॥ १९ ॥
लेखनं छर्दने भूर्जे लिपिन्यासेऽथ वर्जनम् ।
हिंसात्यागयोर्वपनं बीजाधाने च मुण्डने ॥ २० ॥
वसनं छादने वस्त्रे वमनं छर्दनेऽर्दने ।
वर्द्धनं वृद्धिवर्द्धिष्णुच्छेदे घट्यां तु वर्द्धिनी ॥ २१ ॥
व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽहनि ।
व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु ॥ २२ ॥
दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे ।
वर्तनो वामने क्लीवं वृत्तौ स्त्री प्रेषणाध्वनोः ॥ २३ ॥

(१) चङ्क्रमे-ख. ।

न पुंसि तूलनालायां तर्कुपीठे च जीवने ।
वर्त्तिष्णौ त्रिषु वज्री तु बुद्धे देवाधिपे पुमान् ॥ २४ ॥
वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयवत् ।
वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि ॥ २५ ॥
वर्ष्म देहप्रमाणातिसुन्दराकृतिषु स्मृतम् ।
वर्त्म नेत्रच्छदे मार्गे वाजी वाणाश्वपक्षिषु ॥ २६ ॥
वामनोऽप्यतिखर्वे च त्रिषु पुंसि तु दिग्गजे ।
हरावङ्कोटवृक्षेऽथ वासनं धूपनेऽपि च ॥ २७ ॥
वारिधान्यां च वस्त्रे च प्रत्याशाज्ञानयोः स्त्रियाम् ।
वाग्मी पटौ सुराचार्ये विज्ञानं ज्ञानकर्मणोः ॥ २८ ॥
वितुन्नं सुनिषण्णे च शैवाले च नपुंसकम् ।
वितानो यज्ञ उल्लोचे विस्तारे पुन्नपुंसकम् ॥ २९ ॥
क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो मत्ततुच्छयोः (१) ।
विमानो व्योमयाने च सार्वभौमगृहेऽपि च ॥ ३० ॥
घोटके यानपात्रे च पुन्नपुंसकयोर्मतः ।
विक्लिन्नो जरसा जीर्णे शीर्णे चार्द्रे च वाच्यवत् ॥ ३१ ॥
विपन्नं विपदाक्रान्ते त्रिषु पुंसि भुजङ्गमे ।
विच्छिन्नं च समालब्धे विभक्तेऽप्यभिधेयवत् ॥ ३२ ॥
विलग्नं न स्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके ।
विषघ्नस्तु शिरीषे ना गुडूचीत्रिवृतोः स्त्रियाम् ॥ ३३ ॥
व्युत्थानं स्वातन्त्र्यकृत्ये विरोधाचरणेऽपि च ।
वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु ॥ ३४ ॥
वृषा कर्णे महेन्द्रे ना वेदना ज्ञानदुःखयोः ।
वेष्टनं कर्णशष्कुल्यामुष्णीषे मुकुटे वृतौ ॥ ३५ ॥
व्योम वारिणि चाकाशे भास्करस्यार्चनाश्रये ।
शकुनिः पुंसि विहगे सौबले करणान्तरे ॥ ३६ ॥

---

( १ ) मन्द-ख. ।

शयनं सुरते निद्राशय्ययोश्च नपुंसकम् ।
शमनं शान्तिवधयोः शमनः श्राद्धदैवते ॥ ३७ ॥
श्वसनं श्वसिते पुंसि मारुते मदनद्रुमे ॥
शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः ॥ ३८ ॥
शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम् ।
शङ्खिनी श्वेतवृन्दायां चोरपुष्प्यां वधूभिदि ॥ ३९ ॥
शङ्खी हरौ समुद्रे ना शङ्खवत्यभिधेयवत् ।
शतघ्नी शस्त्रभेदे स्यात् वृश्चिकाल्यां करञ्जके ॥ ४० ॥
शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु ।
शाखी स्यात् पादपे वेदे तुरुष्काख्यजने पुमान् ॥ ४१ ॥
शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे ।
मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः ॥ ४२ ॥
शिल्पी तु वाच्यवत् कारौ स्त्रियां कोलदलौषधौ ।
शूली स्याच्छङ्करे पुंसि शूलरोगिणि वाच्यवत्(१) ।
शृङ्गी शृङ्गयुते नागे वृषपर्वतयोरपि ॥ ४३ ॥
श्लेष्मघ्नी मल्लिकायां च ज्योतिष्मत्यां च योषिति ।
शोभनो योगभेदे ना सुन्दरे वाच्यलिङ्गकः ॥ ४४ ॥
सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च ।
स्तननं ध्वनिमात्रे स्यान्मेघशब्दे च कुन्थिते ॥ ४५ ॥
समानः सत्समैकेषु त्रिषु ना नाभिमारुते ।
सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे ॥ ४६ ॥
स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम् ।
संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे ॥ ४७ ॥
स्यन्दनं तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम् ।
सञ्जनं तु भवेत् क्लीबमुपरक्षगवट्टयोः ॥ ४८ ॥
वाच्यलिङ्गं कुलीने स्यात् कल्पनायां तु योषिति ।

---

( १ ) इदमर्धं नास्ति—क. ।

सन्धानं स्यादभिषवे तथा सङ्घटनेऽपि च ॥ ४९ ॥
सम्पन्नं साधितेऽपि स्यात् सम्पत्तिसहितेऽन्यवत् ।
सन्धिनी वृषभाक्रान्ताकालदुग्धोस्त्रयोः स्त्रियाम् ॥ ५० ॥
सद्म स्यान्मन्दिरे नीरे संव्यानं छादनेंऽशुके ।
सदनं मन्दिरे तोये स्वामी प्रभुविशाखयोः ॥ ५१ ॥
सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते ।
स्थापनं रोपणे पुंसवने पाठौषधौ स्त्रियाम् ॥ ५२ ॥
सावनो यज्ञकर्मान्ते यजमानप्रचेतसोः ।
साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ ॥ ५३ ॥
निर्वर्तनोपायमेढ् दापनेऽनुगमे धने ।
साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च ॥ ५४ ॥
सीमा घाटस्थितिक्षेत्रेष्वण्डकोपेऽपि च स्त्रियाम् ।
सूचना व्यधने दृष्टौ गन्धनेऽभिनयेऽपि च ॥ ५५ ॥
सेचनं रक्षणे सेके नौकायाः सेकभाजने ।
सेनानीः स्यात्पुमान् कार्तिकेये सेनापतावपि ॥ ५६ ॥
सेवनं सीवनोपास्त्योर्हली रामे च कर्षके ।
हस्तिनी गजयोषायां जातिभेदे च योषितः ॥ ५७ ॥
हसनं न द्वयोर्हासेऽङ्गारधान्यां तु योषिति ।
हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः ॥ ५८ ॥
ह्लादिनी वज्रतडितोर्हिण्डनं भ्रमणे रते ।

( नचतुष्कम् )

अवलग्नोऽस्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके ॥ ५९ ॥
अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे ।
अपाचीनमवागर्थे विपर्यस्ते च वाच्यवत् ॥ ६० ॥
अभिपन्नोऽपराधेऽभिग्रस्ते चापद्गते त्रिषु ।
अवदानं खण्डने स्यादतिवृत्ते च कर्मणि ॥ ६१ ॥
अभिमानोऽर्थादिदर्पेऽज्ञाने प्रणयहिंसयोः ।

अनीकिनी स्त्रियां सेनामात्रसेनाविशेषयोः(१) ॥ ६२ ॥
अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासनेऽपि च ।
अन्वासनं स्नेहवस्तावुपास्तावनुशोचने ॥ ६३ ॥
अर्यमा तु पुमान् सूर्ये पितृदेवान्तरेऽपि च ।
अथर्वा ब्राह्मणे पुंसि वेदे तु स्यान्नपुंसकम् ॥ ६४ ॥
भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे ।
कुलेऽपि च पुमानायोधनं युद्धे वधेऽपि च ॥ ६५ ॥
स्यादाकलनमाकाङ्क्षा परिसङ्ख्यानबन्धने ।
आतञ्चनं प्रतीवापजवनाप्यायनेषु च ॥ ६६ ॥
आराधनं च पचने प्राप्तौ सन्तोषणेऽपि च ।
आच्छादनं सम्पिधाने वस्त्रेऽपवृतिमात्रके ॥ ६७ ॥
आस्कन्दनं तिरस्कारे रणे संशोषणेऽपि च ।
आवेशनं शिल्पिशाले भूतावेशप्रवेशयोः ॥ ६८ ॥
आत्मयोनिः पुमान् कामदेवे च परमेष्ठिनि ।
उपधानं विषे गण्डौ प्रणयेऽपि नपुंसकम् ॥ ६९ ॥
उत्सादनं समुल्लेखोद्वाहनोद्वर्तनेषु च ।
स्यादुत्पतनमुत्पत्तौ तथोर्ध्वगमनेऽपि च ॥ ७० ॥
उद्वर्त्तनमुत्पतने विलेपने घर्षणे क्लीबम् ।
उदयनमुदये क्लीबं वत्सेशागस्त्ययोः पुंसि ॥ ७१ ॥
उद्वाहनं (२)द्विसीत्ये स्यादुद्रज्ज्वामुद्वाहनी मता ।
उपासनं शराभ्यासेऽप्युपास्तावासनेऽपि च ॥ ७२ ॥
कपीतनो गर्दभाण्डशिरीषाम्रातकेषु च ।
अश्वत्थे च कलापी तु प्लक्षबर्हिणयोः पुमान् ॥ ७३ ॥
कलध्वनिः पुमान् पारावते पिकमयूरयोः ।
कञ्चुक्यन्तःपुराध्यक्षे पिङ्गऽहो जोङ्गकद्रुमे ॥ ७४ ॥
कात्यायनो वररुचौ विशेषे च मुनेः पुमान् ।

---

( १ ) प्रभेदयोः—ख. ( २ ) प्रणीते—क.

काषायवस्त्रे विधवार्द्धजरत्युमयोः स्त्रियाम् ॥ ७५ ॥
कुम्भयोनिरगस्त्ये स्याद्वसिष्ठद्रोणयोः पुमान् ।
कुचन्दनं च पत्राङ्गे द्रुभेदे रक्तचन्दने ॥ ७६ ॥
कुण्डली वरुणे केकिभोगिनोश्च सकुण्डले ।
केसरी तुरगे सिंहे पुन्नागे नागकेसरे ॥ ७७ ॥
क्रोञ्चादनं तु पिप्पल्यां चिञ्चोटकमृणालयोः ।
खड्गधेनुः स्त्रियां खड्गपुत्रिकागण्डकस्त्रियोः ॥ ७८ ॥
गवादनीन्द्रवारुण्यां गवां घासादनाश्रये ।
गदयित्नुः पुमान्कामे जल्पाके कामुकेऽपि च ॥ ७९ ॥
घनाघनो वर्षुकाब्दे मत्तघातुककुञ्जरे ।
चक्रे च घोषयित्नुस्तु विप्रकोकिलयोः पुमान् ॥ ८० ॥
चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च ।
चोलकी तु करीरे स्यान्नारङ्गे किष्कुपर्वणि ॥ ८१ ॥
जलाटनो लोहपृष्ठे जलौकायां जलाटनी ।
तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति ॥ ८२ ॥
मांसिकाकटुरोहिण्योस्तरस्वी शूरवेगिनोः ।
तपोधनस्तापसे स्यान्मुण्डीर्यां तु तपोधना ॥ ८३ ॥
द्विजन्मा दशने विप्रे दुर्नाम क्लीबमर्शसि ।
स्याद्दीर्घकोषिकायां स्त्री देवसेना तु वज्रिणः ॥ ८४ ॥
सुतायामपि सेनायां देवतानां च योषिति ।
नागाञ्जनेभसुन्दर्यां नागयष्टौ च योषिति ॥ ८५ ॥
भवेन्निधुवनं कम्पे सुरते च नपुंसकम् ।
निर्वासनं हिंसने स्यान्नगरादेर्बहिष्कृतौ ॥ ८६ ॥
निर्भर्त्सनं खलीकारेऽलक्तकेऽपि नपुंसकम् ।
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ॥ ८७ ॥
निशामनं दर्शने स्यादालोचने च न द्वयोः ।
निशमनमुक्तं दृष्टौ श्रुतौ निरसनं वधे प्रतिक्षेपे ॥ ८८ ॥
निष्ठीवने प्रजननं योनौ जन्मन्यपि क्लीबम् ।

प्रसहनमपि भङ्गे स्यात् क्षेपे पञ्चाननः शिवे सिंहे ॥ ८९ ॥
प्रहसनमपि प्रहासे रूपकभेदे च परिहासे ।
प्रणिधानं प्रयत्ने स्यात् समाधौ च प्रवेशने ॥ ९० ॥
प्रयोजनं कार्यहेत्वोः पलाशी वृक्षरक्षसोः ।
अथ प्रवचनं वेदे प्रकृष्टवचनेऽपि च ॥ ९१ ॥
प्रतिपन्नोऽन्यलिङ्गः स्याद्विज्ञातेऽङ्गीकृतेऽपि च ।
प्रस्फोटनं तु शूर्पं स्यात्ताडने च विकाशने ॥ ९२ ॥
प्रतिमानं प्रतिच्छायागज(१)कुम्भान्तरालयोः ।
प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च ॥ ९३ ॥
प्रत्यर्थी वाच्यलिङ्गः स्याच्छत्रौ च प्रतिवादिनि ।
परिज्वा तु पुमानिन्दौ याज्ञिके परिचारके ॥ ९४ ॥
प्रसाधनी तु कङ्कत्यां सिद्धौ वेशे प्रसाधनम् ।
पयस्विनी नदीधेन्वोर्विभावर्यां च योषिति ॥ ९५ ॥
अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च ।
पृथग्जनस्तु पुंलिङ्गः कथितो नीचमूर्खयोः ॥ ९६ ॥
फलकी मत्स्यभेदे ना वाच्यवत्फलकान्विते ।
वारकी शत्रुचित्राश्वपर्णाजीवपयोधिषु ॥ ९७ ॥
भूतात्मा पुंसि निर्दिष्टो देहे च परमेष्ठिनि ।
महाधनं महामूल्ये (२)सुवर्णे सिल्हकेऽपि च ॥ ९८ ॥
महासेनः कार्त्तिकेये महासैन्यपतावपि ।
मदयित्नुर्मद(३)युते पुमान् मद्ये नपुंसकः ॥ ९९ ॥
महामुनिरगस्त्ये ना कुस्तुम्बुरुणि न द्वयोः ।
मातुलानी कलाये स्याद्भङ्गायां मातुलस्त्रियाम् ॥ १०० ॥
मालुधानो मातुलाहौ मालुधानी लतान्तरे ।
मेधावी ना शुके ब्राह्मयां स्त्रियां मेधान्विते त्रिषु ॥ १०१ ॥
रसायन विषेऽपि स्याज्जराव्याधिजिदौषधौ ।

(१) दन्त—ख.　　(२) सुवर्णे—ख.　　(३) कामदेवे—ख. ।

पुंलिङ्गः पक्षिराजे च विडङ्गाख्यौषधेऽपि च ॥ १०२ ॥
राजादनं क्षीरिकायां प्रियाले किंशुकेऽपि च ।
ललाम स्यात् प्रभावे च लाञ्छनध्वजवाजिषु ॥ १०३ ॥
शृङ्गे प्रधाने भूषायामपि वालधिपुण्ड्रयोः ।
लाङ्गली नालिकेरद्रौ रेवतीरमणे पुमान् ॥ १०४ ॥
वनश्वा गन्धमार्जारे वञ्चकव्याघ्रयोः पुमान् ।
वर्धमानः प्रश्नभेदे शरावैरण्डविष्णुषु ॥ १०५ ॥
विस्मापनः स्यात्कुहके गन्धर्वनगरे स्मरे ।
विसर्जनं परित्यागे दाने सम्प्रेषणेऽपि च ॥ १०६ ॥
विरोचनः प्रल्हादस्य तनयेऽर्केऽग्निचन्द्रयोः ।
विहेठनं तु हिंसायां मर्दने च विडम्बने ॥ १०७ ॥
भवेद्विहननं विघ्नहिंसयोस्तूलपिञ्जने ।
विषयी विषयासक्ते वाच्यवत् क्लीबमिन्द्रिये ॥ १०८ ॥
पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च ।
विष्वक्सेना फलिन्यां स्याद्विष्वक्सेनो जनार्दने ॥ १०९ ॥
विलेपनी सुवेषस्त्रीयवाग्वोरपि योषिति ।
विलासी भोगिनि व्याले विस्वप्सा नाऽग्निचन्द्रयोः ॥११०॥
वृक्षादनश्चलदले मधुच्छत्रकुठारयोः ।
वृक्षादनी तु वन्दायां विदारीकन्दकेऽपि च ॥ १११ ॥
वैरोचनिस्तु सुगते बलिदैत्यार्कपुत्रयोः ।
शिखरी स्यादपामार्गे शैलपादपयोः पुमान् ॥ ११२ ॥
शिखण्डिनी यूथिकायां गुञ्जायामपि योषिति ।
शिखण्डी ना कलापे स्याद् गाङ्गेयारिमयूरयोः ॥ ११३ ॥
शृङ्गारी पूगगजयोः सशृङ्गारसुवेशयोः ।
अथ श्लेष्मघना मल्ल्यां केतक्यामपि योषिति ॥ ११४ ॥
सम्मूर्च्छनमभिव्याप्तावुच्छ्रायमोहयोरपि ।
समुत्थानं समुद्योगे व्याधीनां निर्णयेऽपि च ॥ ११५ ॥
सदादानोऽभ्रमातङ्गे हेरम्बे गन्धहस्तिनि ।

स्यात्संवदनमालोचे वशीकारे नपुंसकम् ॥ ११६ ॥
समादानं समीचीनग्रहणे सौगताह्निके ।
संवादनं वाहने स्याद्धारादेरङ्गमर्दने ॥ ११७ ॥
समापनं परिच्छेदे समाप्तिवधयोरपि ।
सनातनः शाश्वतेऽजे पितृतिथ्यन्तरे हरे ॥ ११८ ॥
स्तनयित्नुः पुमान् वारिधरेऽपि स्तनितेऽपि च ।
सरोजिनी तु कमलाकरे पद्मे च योषिति ॥ ११९ ॥
समापन्नं समाप्ते स्यात् प्राप्ते क्लिष्टे वधेऽपि च ।
सम्बाधनं द्वाःसदने शूलाग्रद्वारपालयोः ॥ १२० ॥
संयमनी यमपुर्यां संयमनं बन्धने व्रतेऽपि स्यात् ।
सारसनमप्युरस्त्रे तनुत्रिणां मेखलायाञ्च ॥ १२१ ॥
सामधेनी तु धाय्यायां समिध्यपि च योषिति ।
सामयोनिस्तु सामोत्थे ब्रह्मकुञ्जरयोरपि ॥ १२२ ॥
सुदर्शनो हरेश्चक्रे मेरुजम्बुद्रुमे पुमान् ।
न द्वयोः शक्रनगरे आज्ञौषधिभिदोः स्त्रियाम् ॥ १२३ ॥
सुयामुनो वत्सराजे प्रासादेऽभ्रान्तरेऽच्युते ।
सुकर्मा तु पुमान् योगभेदे स्याद् देवशिल्पिनि ॥ १२४ ॥
सुधन्वा प्रौढधानुष्के त्रिषु ना विश्वकर्मणि ।
सुपर्वा ना शरे वंशे पर्वधूमसुरेष्वपि ॥ १२५ ॥
सुदामा तु पुमान् वारिधरपर्वतभेदयोः ।
सौदामन्यप्सरोभेदे तडित्तद्भेदयोः स्त्रियाम् ॥ १२६ ॥
हर्षयित्नुः पुमान् पुत्रे काञ्चने च नपुंसकम् ।

( नपञ्चकम् )

अथातिसर्जनं दाने वधेऽपि च नपुंसकम् ॥ १२७ ॥
अपवर्जनन्तु दाने निर्वाणत्यागयोरपि ।
अपसर्जनमाम्नाते परिवर्जनदानयोः ॥ १२८ ॥
अग्रजन्मा द्विजे ज्येष्ठे भ्रातरि ब्रह्मणि स्मृतः ।
अथानुवासनं स्नेहवस्तिधूपनयोरपि ॥ १२९ ॥

अभिनिष्णानोऽप्यक्षरमात्रे विसर्जनीयेऽपि ।
अन्तेवासी शिष्येऽपि स्याच्चण्डाले प्रान्तगेऽपि च ॥१३०॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ।
उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते ॥ १३१ ॥
कारन्धमी कांस्यकारे धातुवादरतेऽपि च ।
कामचारी कामुके स्यात् स्वच्छन्दकलविङ्कयोः ॥ १३२ ॥
किष्कुपर्वा पुमानिक्षौ वेणौ पोटगलेऽपि च ।
कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे ॥ १३३ ॥
स्याद् गन्धमादनो भृङ्गे गन्धके वानरान्तरे ।
स्त्री सुरायां नगे न स्त्री चिरजीवी ककाकयोः ॥ १३४ ॥
तिक्तपर्वा हिलमोचीगुडूचीयष्टिषु स्त्रियाम् ।
दन्तधावनः खदिरे दन्तशुद्धौ नपुंसकम् ॥ १३५ ॥
स्याद् धूमकेतनः पुंसि केतुग्रहहुताशयोः ।
स्यान्नन्दिवर्द्धनो भर्गे पक्षान्ते तनयेऽपि च ॥ १३६ ॥
प्रतिपादनन्तु दाने प्रतिपत्तौ च बोधने ।
स्यात् पृष्ठहायनो धान्यविशेषे च मतङ्गजे ॥ १३७ ॥
प्रचलाकी मयूरे स्याद् भुजङ्गे चापि दृश्यते ।
स्यात् पद्मलाञ्छनो लोकेश्वरे ब्रह्मणि भास्करे ॥ १३८ ॥
धनदे च स्त्रियां तारालक्ष्मीवाग्देवतासु च ।
पीतचन्दनमुद्दिष्टं कालीयकहरिद्रयोः ॥ १३९ ॥
पृष्ठशृङ्गी पुमान् दंशभीरौ षण्डे वृकोदरे ।
वरचन्दनमाख्यातं कालीये देवदारुणि ॥ १४० ॥
वरवर्णिनी तु लाक्षाहरिद्रारोचनासु च ।
स्त्रीरत्ने च फलिन्याञ्च साधीयस्यामपि स्त्रियाम् ॥१४१॥
मधुसूदनस्तु पुंसि स्याद् भ्रमरे वनमालिनि ।
महारजनमुद्दिष्टं शातकुम्भकुसुम्भयोः ॥ १४२ ॥
स्यान्मृत्युवञ्चनः शम्भौ श्रीफलद्रोणकाकयोः ।
वनमाली च गोविन्दे वाराह्यां वनमालिनी ॥ १४३ ॥

विषायी स्यात् पुमान् राज्ञि वैषयिकजनेऽपि च ।
इन्द्रिये कामदेवे च विषयासक्तपूरुषे ॥ १४४ ॥
विश्वकर्मा सहस्रांशौ मुनिभिद्देवशिल्पिनोः ।
विघ्नकारी स्मृतो घोरदर्शनेऽपि विघातिनि ॥ १४५ ॥
वृषपर्वा पुमान् दैत्यभेदेऽप्यन्धकसूदने ।
व्योमचारी तु निर्दिष्टो देवतायां विहङ्गमे ॥ १४६ ॥
शकुलादनी स्त्रियां कृष्णभेदीकटुकशाकयोः ।
शालङ्कायन उद्दिष्टो मुनिभेदे च नन्दिनि ॥ १४७ ॥
शिवकीर्त्तनस्तु पुंसि (स्याद्) भृङ्गरीटेऽसुरद्विषि ।
श्वेतवाहन इत्येष सुधाधाम्नि धनञ्जये ॥ १४८ ॥
श्वेतधामा पुमानिन्दौ घनसाराब्धिफेनयोः ।
स्यात् षष्टिहायनो धान्यविशेषे कुञ्जरे पुमान् ॥ १४९ ॥
सम्प्रयोगी कलाकेलौ कामुके सम्प्रयोजके ।
हरिचन्दनमस्त्री स्याद् देवतानां महारुहे ॥ १५० ॥
नपुंसकन्तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि ।
हरिवाहनस्तु पुंसि स्यात् शचीपतिविवस्वतोः ॥ १५१ ॥

( नषट्कम् )

अन्तावसायी श्वपचे मुनिभेदे च नापिते ।
कलानुनादी रोलम्बे कलविङ्के कपिञ्जले ॥ १५२ ॥
जायानुजीवी पुंसि स्यान्नटे च बकपक्षिणि ।
सहस्रवेधि क्लीबे स्याद् रामठे नाम्बुवेतसे ॥ १५३ ॥

इति नान्तवर्गः ।

---

( पैकम् )

पा ना वाताण्डपूतेषु पाने पातरि कीर्त्तितः ।
स्त्रियान्तु रक्षणे पाने पूते पूरितके च सः ॥ १ ॥

( पद्विकम् )

कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने ।
कपिर्ना सिह्लके शाखामृगे च मधुसूदने ॥ २ ॥
कूपः कूपकमृण्माने गर्त्ताम्बुगुणवृक्षके ।
कृपो द्रोणश्यालके स्याद् द्रोणपत्न्यां कृपी मता ॥ ३ ॥
कृपा दयायां क्षेपस्तु निन्दाविक्षेपलेपने ।
विलम्बप्रेरणे गर्वे खर्पः क्रोधे बलात्कृतौ ॥ ४ ॥
गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि ।
ग्रामौघाधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम् ॥ ५ ॥
क्षुपः क्षुपस्पर्शनयोस्त्रपु सीसकरङ्गयोः ।
तल्पमट्टे कलत्रे च शयनीये च न द्वयोः ॥ ६ ॥
त्रपा लज्जाकुलटयोस्तापः सन्तापकृच्छ्रयोः ।
तापी नद्यन्तरे दर्पः कस्तूर्यामप्यहङ्कृतौ ॥ ७ ॥
नीपः कदम्बबन्धूकनीलाशोकद्रुमेष्वपि ।
पुष्पं विकाशकुसुमस्त्रीरजःसु नपुंसकम् ॥ ८ ॥
रूपं स्वभावे सौन्दर्य्ये नाणके पशुशब्दयोः ।
ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥ ९ ॥
रेपः स्यान्निन्दिते क्रूरे रोपो रोपणबाणयोः ।
लेपः प्रलेपने जग्धौ वपा विवरमेदसोः ॥ १० ॥
बाष्प ऊष्मणि नाऽस्त्रेऽथ शष्पं बालतृणे स्मृतम् ।
पुंसि स्यात् प्रतिभाहानौ शाप आक्रोशदिव्ययोः ॥ ११ ॥
शिल्पं स्रुवे क्रियायोग्ये स्वापः शयननिद्रयोः ।
स्पर्शाज्ञतायामज्ञाने सूपो व्यञ्जनसूदयोः ॥ १२ ॥

( पत्रिकम् )

अनूपो महिषे नाऽम्बुप्रायदेशे तु वाच्यवत् ।
अस्रपा तु जलौकायां डाकिन्यां राक्षसे तु ना ॥ १३ ॥
आवापो भाण्डे वपने परिक्षेपालवालयोः ।
आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृतः ॥ १४ ॥

काकल्पः कल्पने वेशे उडुपन्तु प्लवेऽस्त्रियाम् ।
चन्द्रे पुंस्युलपो न स्त्री गुल्मिन्यां ना तृणान्तरे ॥ १५ ॥
कच्छपी वल्लकीभेदे द्वुलौ क्षुद्रगदान्तरे ।
पुंसि निध्यन्तरे कूर्मे मल्लबन्धान्तरेऽपि च ॥ १६ ॥
कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः ।
चन्द्रे विदग्धे व्याकरणभेदेऽपि कथ्यते बुधैः ॥ १७ ॥
कशिपुर्भक्ताच्छादनयोरेकोक्त्या पृथक् तयोः पुंसि ।
कश्यप उक्तो मुनिमृगयोर्भेदे काश्यपी क्ष्मायाम् ॥ १८ ॥
कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले ।
कुशे दिनस्याष्टमांशे ना सूर्य्ये कुणपी पुनः ॥ १९ ॥
विट्शारिकायां कुणपः पूतिगन्धौ शवेऽपि च ।
जिह्वापः शुनि मार्ज्जारे प्रतापस्तापतेजसोः ॥ २० ॥
पादपः पादपीठेऽद्रौ पादुकायान्तु पादपा ।
रक्तपा स्याज्जलौकायां डाकिन्यां ना तु राक्षसे ॥ २१ ॥
विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे ।
विटाधिपे ना विकल्पः पुंसि भ्रान्तौ च कल्पने ॥ २२ ॥

( पचतुष्कम् )

अभिरूपो बुधे रम्येऽपलापः प्रेम्णयपह्नवे ।
अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च ॥ २३ ॥
उपतापस्त्वरायां स्याद्दुत्तापगदयोरपि ।
जलकूपी कूपगर्त्ते पुष्करिण्याञ्च योषिति ॥ २४ ॥
नागपुष्पस्तु पुन्नागनागकेशरचम्पके ।
परिवापस्तु पर्य्युप्तौ जलस्थाने परिच्छदे ॥ २५ ॥
परितापस्तु पुंसि स्याद् दुःखे च नरकान्तरे ।
परिकम्पो भये कम्पे प्रासरूपो ज्वरम्ययोः ॥ २६ ॥
पिण्डपुष्पमशोके च जवायाञ्च कुशेशये ।
बहुरूपः शिवे विष्णौ धूनके सरटे स्मरे ॥ २७ ॥
मेघपुष्पं पिण्डाभ्राम्बुनादेये ना हरेर्हये ।

विप्रलापो विरोधोक्तावपार्थवचनेऽपि च ॥ २८ ॥
बीजपुष्पं मरुबके तथा मदनकेऽपि च ।
वृकधूपस्तु सरलद्रवकृत्रिमधूपयोः ॥ २९ ॥
वृषाकपिः पुमान् कृष्णे शङ्करे जातवेदसि ।
हेमपुष्पमशोकेऽपि जपापुष्पे नपुंसकम् ॥ ३० ॥

( पपञ्चकम् )

भवेच्चामरपुष्पन्तु पूगे काशाम्रकेतके ।

इति पान्तवर्गः ।

---

( फैकम् )

फो यज्ञसाधने स्फाने झञ्झावाते च पुंस्ययम् ।
फं रूक्षोक्तौ च फूत्कारे तथा निष्फलभाषणे ॥ १ ॥

( फद्विकम् )

गुम्फस्तु गुम्फने बाहोरलङ्कारे च कीर्त्यते ।
रेफो वर्णे च पुंसि स्यात् कुत्सिते पुनरन्यवत् ॥ २ ॥
शफं मूले तरूणां स्याद् गवादीनां खुरेऽपि च ।
शिफा जटायां सरिति मांसिकायाञ्च मातरि ॥ ३ ॥

इति फान्तवर्गः ।

---

( बैकम् )

बः पुमान् वरुणे सिन्धौ भगे तोये गतेऽपि च ।
गन्धने तन्तुसन्ताने पुंस्येव वपने स्मृतः ॥ १ ॥

( बद्विकम् )

कम्बुः शङ्खेऽस्त्रियां पुंसि शम्बूके वलये गजे ।
कम्बिरंशे च वंशस्य खजाकायामपि स्त्रियाम् ॥ २ ॥
क्लीबं स्यात् पण्डके न स्त्री वाच्यलिङ्गस्त्वविक्रमे ।
खर्बं सङ्ख्यान्तरे क्लीबं नाचे वामनके त्रिषु ॥ ३ ॥

गर्वोऽभिमानेऽवलेपे जम्बुः स्यात् पादपान्तरे ।
तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम् ॥ ४ ॥
डिम्बो भयध्वनावण्डे फुप्फुसप्लीहविप्लवे ।
दर्विः स्त्रियां खजाकायां फणायामुरगस्य च ॥ ५ ॥
पूर्वे तु पूर्वजेषु स्युः पूर्वः प्रागाद्ययोस्त्रिषु ।
लम्बा पद्मालयागौर्योस्तिक्ततुम्ब्यामपि स्त्रियाम् ॥ ६ ॥
बिम्बस्तु प्रतिबिम्बे स्यन्मण्डले पुन्नपुंसकम् ।
बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान् ॥ ७ ॥
शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ ।
शुभान्विते त्रिषु स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः ॥ ८ ॥

( बत्रिकम् )

कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान् ।
कलम्बो शाकभेदे स्यात् कदम्बशरयोः पुमान् ॥ ९ ॥
कादम्बः स्यात् पुमान् पक्षिविशेषे सायकेऽपि च ।
गजाह्वा गजपिप्पल्यां गजाह्वं हस्तिनापुरे ॥ १० ॥
गन्धर्वः पशुभेदे स्यात् पुंस्कोकिलतुरङ्गयोः ।
अन्तराभवसत्त्वे च गायने खचरेऽपि च ॥ ११ ॥
गोडुम्बः शीर्णवृन्ते च गवादन्यान्तु योषिति ।
द्विजिह्वस्तु खले सर्पे नितम्बः स्कन्धरोधसोः ॥ १२ ॥
स्त्रियाः पश्चात् कटावद्रेः कटके कटिमात्रके ।
प्रलम्बो दैत्यभेदे स्यात् त्रपुषेऽपि पयोधरे ॥ १३ ॥
लताङ्कुरे च शाखायां हारभेदे प्रलम्बने ।
भूजम्बूरपि गोधूमे विकङ्कतफले स्त्रियाम् ॥ १४ ॥
हेरम्बो विघ्नराजे स्यान्महिषे शौर्यगर्विते ।

( बचतुष्कम् )

राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयोः स्त्रियाम् ॥ १५ ॥
ललजिह्वाऽन्यवत् हिंस्रे क्रमेलकशुनोः पुमान् ।
शतपर्वा तु दूर्वायां वचाभार्गवयोषितोः ॥ १६ ॥

( बपञ्चकम् )

धूलीकदम्बो नीपे स्यात् तिनिशे वरुणद्रुमे ।
शृगालजम्बूर्गोडुम्बे तथा घोण्टाफले स्त्रियाम् ॥ १७ ॥

इति बान्तवर्गः ।

---

( भैकम् )

भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद् भृगुनन्दने ।
भूः स्थानमात्रे कथिता धरण्यामपि योषिति ॥ १ ॥

( भद्विकम् )

कुम्भो राश्यन्तरे हस्तिमूर्द्धांशे राक्षसान्तरे ।
कार्मुके वारनार्य्याञ्च घटे क्लीबन्तु गुग्गुलौ ॥ २ ॥
स्त्रियामुखाकटफलयोः पृश्निकायाञ्च पाटलौ ।
गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके ॥ ३ ॥
जम्भो दैत्यविशेषे ना दन्ते जम्बीरभक्ष्ययोः ।
जृम्भा विकाशजृम्भणयोस्त्रिषु डिम्भोऽपि बालिशे बाले॥४॥
दम्भस्तु कैतवे कल्के दृन्भूः स्त्री सर्पचक्रयोः ।
नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् ॥ ५ ॥
द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे ।
निभस्तु कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु ॥ ६ ॥
रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे ।
विभुः प्रभौ सर्वगते शङ्करब्रह्मणोस्तु ना ॥ ७ ॥
शम्भुः पुंसि महादेवे परमेष्ठिनि चाऽर्हति ।
शुभो योगे शुभं क्षेमे वाच्यवत् क्षेमशालिनि ॥ ८ ॥
खसञ्चारिपुरे स्त्री तु शोभा कान्तीच्छयोर्मता ।
सभा सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि ॥ ९ ॥
स्वभूर्ना ब्रह्मणि हरौ स्तम्भः स्थूणाजडत्वयोः ।

( भत्रिकम् )

आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः ॥ १० ॥

आत्मभूर्ना विधौ कामेऽप्यृषभस्त्वौषधान्तरे ।
स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः ॥ ११ ॥
उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति ।
शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता ॥ १२ ॥
ककुभ् स्त्रियां प्रवेणीदिक्शोभासु चम्पकस्रजि ।
ककुभो रागभेदेऽपि वीणाङ्गेऽर्जुनपादपे ॥ १३ ॥
कटभी वृक्षभेदेऽपि ज्योतिष्मत्यामपि स्त्रियाम् ।
करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते ॥ १४ ॥
कुसुम्भं हेमनि महारजते ना कमण्डलौ ।
गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि ॥ १५ ॥
रासभे गर्दभी क्षुद्ररोगजन्तुविशेषयोः ।
दुर्लभस्त्रिषु दुष्प्रापे कर्चूरे दुन्दुभिः पुमान् ॥ १६ ॥
वरुणे दैत्यभेर्योश्च स्त्र्यक्षबिन्दुत्रिकद्वये ।
निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ ॥ १७ ॥
वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे ।
वर्षाभूः स्त्री च शोथघ्न्यां भूलताप्लवयोः पुमान् ॥ १८ ॥
विष्कम्भो योगभेदे स्याद्विस्तारप्रतिबन्धयोः ।
रूपकाङ्गप्रभेदे च बन्धभेदे च योगिनाम् ॥ १९ ॥
विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च ।
विष्टम्भः प्रतिबन्धे स्यात् प्रभेदे चामयस्य च ॥ २० ॥
वृषभः श्रेष्ठवृषयोर्वैदर्भी रीतिभिद्यपि ।
वैदर्भे वाक्यवक्रत्वे शरभस्तु पशोर्भिदि ॥ २१ ॥
करभे वानरभिदि स्त्रनाभिर्ज्ञातितुल्ययोः ।
सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति ॥ २२ ॥
चम्पके च वसन्ते च तथा जातीफले पुमान् ।
स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु ॥ २३ ॥
विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्

( भचतुष्कम् )

अनुष्टुभ् स्यात् सरस्वत्यां छन्दोभेदे च योषिति ॥ २४ ॥
अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि ।
शातकुम्भं सुवर्णं स्यात् शातकुम्भोऽश्वमारके ॥ २५ ॥

इति भान्तवर्गः ।

---

( मैकम् )

मो यमे समयेऽपि स्यात् विधे च मधुसूदने ।
मा स्त्री पद्मालयायां स्यात् पुंलिङ्गश्चन्द्रशेखरे ॥ १ ॥

( मद्विकम् )

आमो रुक्तद्विदोः पुंसि स्यादपक्वेऽन्यलिङ्गकः ।
उमाऽतसीहैमवतीहरिद्राकीर्त्तिकान्तिषु ॥ २ ॥
ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः ।
वस्त्रसङ्कोचरेखायां वेदनापीडयोरपि ॥ ३ ॥
क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च ।
क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकम् ॥ ४ ॥
वाच्यवत् शक्तहितयोः कामः स्मरेच्छयोः पुमान् ।
रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम् ॥ ५ ॥
कामिनी कामुके रत्यां स्त्री किम् क्षेपवितर्कयोः ।
निन्दायाञ्च परिप्रश्ने वाच्यलिङ्गमुदाहृतम् ॥ ६ ॥
कृमिर्ना कृमिवत्कीटे लाक्षायां कृमिले खरे ।
किर्मी पलाशे शालायां हेमपुत्र्याञ्च योषिति ॥ ७ ॥
क्षुमाऽतसीनीलिकयोः क्षेमं स्याल्लब्धरक्षणे ।
चण्डायां ना शुभे न स्त्री कात्यायन्याञ्च योषिति ॥ ८ ॥
क्षौममट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांशुके ।
शणजेऽतसीजे खर्मं पौरुषे कोषजांशुके ॥ ९ ॥
गमो नाऽक्षविवर्त्ते स्यादपर्यालोचनेऽध्वनि ।
ग्रामः स्वरे संवसथे ग्रीष्म ऊष्मर्त्तभेदयोः ॥ १० ॥

गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः ।
स्तम्बे स्त्रियामामलक्येलावनीवस्त्रवेश्मसु ॥ ११ ॥
घर्मः स्यादातपे ग्रीष्मेऽप्यूष्मस्वेदाम्भसोरपि ।
चमूः सेनाविशेषे च सेनामात्रे च योषिति ॥ १२ ॥
जाल्मः स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु ।
जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे ॥ १३ ॥
तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे ।
दमस्तु दमथे दण्डे कर्दमे दमने पुमान् ॥ १४ ॥
दस्मस्तु यजमाने स्यादपि चौरे हुताशने ।
द्रुमो महीरुहे पारिजाते किम्पुरुषेश्वरे ॥ १५ ॥
धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ ।
अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥ १६ ॥
ध्यामं दमनके गन्धतृणेऽथ श्यामले त्रिषु ।
नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम् ॥ १७ ॥
नेमः कालेऽवधौ गर्त्ते प्राकारे कैतवेऽपि च ।
पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे ॥ १८ ॥
ना नागे स्त्री फञ्जिकार्श्चारटीपन्नगेषु च ।
ब्रह्मी तु फञ्जिकायां स्यात् शाकमत्स्यप्रभेदयोः ॥ १९ ॥
ब्राह्मी तु भारतीसोमवल्लरीब्रह्मशक्तिषु ।
भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि ॥ २० ॥
भामः क्रोधे रवौ दीप्तौ भीष्मो गाङ्गेयघोरयोः ।
भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे ॥ २१ ॥
भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम् ।
भौमः कुजे च नरके पुंसि भूमिभवे त्रिषु ॥ २२ ॥
यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ ।
शरीरसाधनापेक्षनित्यकर्मणि संयमे ॥ २३ ॥
यामस्तु पुंसि प्रहरे संयमे च प्रकीर्त्तितः ।
यामिः कुलस्त्रीस्वस्रोः स्त्री युध्मो धनुषि संयुगे ॥ २४ ॥

रश्मिः पुमान् दीधितौ स्यात् पक्ष्मप्रग्रहयोरपि ।
रमा लक्ष्म्यां रमः कान्ते रक्ताशोकद्रुमे स्मरे ॥ २५ ॥
रामा योषाहिङ्गुनद्योः क्लीबं वास्तूककुष्ठयोः ।
ना राघवे च वरुणे रैणुकेये हलायुधे ॥ २६ ॥
हये च पशुभेदे च त्रिषु चारौ सितेऽसिते ।
रुमा सुग्रीवदारेषु विशिष्टलवणाकरे ॥ २७ ॥
रुक्मञ्च काञ्चने लोहे लक्ष्मीः सम्पत्तिशोभयोः ।
ऋद्धौषधे च पद्मायां वृद्धिनामौषधेऽपि च ॥ २८ ॥
फलिन्यां स्त्री वमिर्वान्तौ स्त्रियां पुंसि हुताशने ।
वामं धने पुंसि हरे कामदेवे पयोधरे ॥ २९ ॥
वल्गुप्रतीपसव्येषु त्रिषु नार्य्यां स्त्रियामथ ।
वामी शृगालीवडवारासभीकरभीषु च ॥ ३० ॥
शमी शक्तुफलायाञ्च शिम्बिकायाञ्च वाग्गुलौ ।
श्यामो वटे प्रयागस्य वारिदे वृद्धदारके ॥ ३१ ॥
पिके च कृष्णहरितोः पुंसि स्यात् तद्वति त्रिषु ।
मरीचे सिन्धुलवणे क्लीब स्त्री शारिवौषधौ ॥ ३२ ॥
अप्रसूताङ्गनायाञ्च प्रियङ्गावपि बागुजौ ।
यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ ॥ ३३ ॥
नीलिकायामथ श्रामी मासे मण्डपकालयोः ।
शुष्मं तेजसि सूर्य्ये ना समा संवत्सरे स्त्रियाम् ॥ ३४ ॥
सर्वसाधुसमानेषु समं स्यदभिधेयवत् ।
सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम् ॥ ३५ ॥
सूक्ष्मं स्यात् कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके ।
सूमं क्षीरे च नभसि सोमस्तु हिमदीधितौ ॥ ३६ ॥
वानरे च कुबेरे च पितृदेवे समीरणे ।
वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ ॥ ३७ ॥
हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् ।
शीतले वाच्यलिङ्गोऽथ होमिर्ना पावके घृते ॥ ३८ ॥

( मत्रिकम् )

अधमः स्याद् गर्ह्यजनेऽप्यागमः शास्त्र आगतौ ।
आश्रमो ब्रह्मचर्यादौ वानप्रस्थे मठे वने ॥ ३९ ॥
अत्रियामुत्तमा दुग्धिकायां स्त्री त्रिषु भद्रके ।
उद्दामो बन्धरहिते स्वतन्त्रे च प्रचेतसि ॥ ४० ॥
कलमः पुंसि लेखन्यां शालौ पटच्चरेऽपि च ।
कुसुमं स्त्री रजोनेत्ररोगयोः फलपुष्पयोः ॥ ४१ ॥
कृत्रिमं लवणभेदे ना सिह्लके रचिते त्रिषु ।
गोलोमी श्वेतदूर्वायां स्याद् वचाभूतकेशयोः ॥ ४२ ॥
गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः ।
गोतमो ना मुनौ बुद्धे रोचनादुर्गयोः स्त्रियाम् ॥ ४३ ॥
तलिमं कुट्टिमे तल्पे चन्द्रहासे वितानके ।
दाडिमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु ॥ ४४ ॥
निष्क्रमो बुद्धिसम्पत्तौ निर्गमे दुष्कुलेऽपि च ।
निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे ॥ ४५ ॥
नियमो मन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते ।
नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च ॥ ४६ ॥
परमं स्यादनुज्ञायामव्ययं परमः परे ।
प्रथमस्तु सवेदादौ प्रधानेऽपि च वाच्यवत् ॥ ४७ ॥
प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि ।
पञ्चमो रागभेदे स्यात् स्वरभेदेऽथ पञ्चमी ॥ ४८ ॥
पाण्डवानाञ्च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु ।
प्रक्रमः क्रमेऽवसरे मध्यमो मध्यजेऽन्यवत् ॥ ४९ ॥
पुमान् स्वरे मध्यदेशेऽप्यवलग्ने नु न स्त्रियाम् ।
स्त्रियां दृष्टरजोनार्य्यां कर्णिकाङ्गुलिभेदयोः ॥ ५० ॥
त्र्यक्षरच्छन्दसि तथा ललामं लाञ्छने ध्वजे ।
शृङ्गे प्रधाने भूषायां तथा वालत्रिपुण्ड्रयोः ॥ ५१ ॥
तुरङ्गे च प्रभावेऽथ व्यायामः पौरुषे श्रमे ।

विषमे दुर्गसञ्चारे विभ्रमो भ्रान्तिहावयोः ॥ ५२ ॥
विद्रुमो रत्नवृक्षेऽपि प्रबालेऽपि पुमानयम् ।
विलोमस्तु प्रतीपे स्याद्भुजङ्गे वरुणे शुनि ॥ ५३ ॥
आमलक्यां विलोमी च विलोमश्चारघट्टके ।
विक्रमस्तु पुमान् क्रान्तिमात्रे स्यात् शक्तिसम्पदि ॥५४॥
संक्रमः क्रमणे पुंसि न स्त्री स्याद् दुर्गसञ्चरे ।
सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि ॥ ५५ ॥
सत्तमः स्यात् पूज्यतमे साधीयस्युत्तमे त्रिषु ।
सरमा कुक्कुरीदेवशुन्योः स्याद् राक्षसीभिदि ॥ ५६ ॥
सुषमाऽत्यन्तशोभायां स्त्री चारौ च समे त्रिषु ।
सुषीमः शीतले चारौ त्रिषु ना पन्नगान्तरे ॥ ५७ ॥

( मचतुष्कम् )

भवेदनुपमा सुप्रतीकिन्यां स्त्री त्रिपूत्तमे ।
अभ्यागमो विरोधाजिघाताभ्युद्गमनान्तिके ॥ ५८ ॥
उपक्रमस्तूपधायां ज्ञात्वारम्भे च विक्रमे ।
चिकित्सायामुपगमः स्वीकारेऽन्तिकसर्पणे ॥ ५९ ॥
जलगुल्मो जलावर्त्ते कच्छपे जलजन्वरे ।
दण्डयामस्तु कीनाशे दिवसे कुम्भसम्भवे ॥ ६० ॥
प्लवङ्गमस्तु मण्डूके तथा शाखामृगेऽपि च ।
पराक्रमो विक्रमे स्यात् सामर्थ्योद्योगयोरपि ॥ ६१ ॥
महापद्मः पुमान् नागनिधिसङ्ख्यान्तरेषु च ।
यातयामोऽन्यवज्जीर्णे परिभुक्तोज्झितेऽपि च ॥ ६२ ॥
सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि ।

( मपञ्चकम् )

अभ्युपगमस्तु पुंसि स्वीकारे निकटगमने च ॥ ६३ ॥
नक्षत्रनेमिरुक्ता रेवत्यां ना ध्रुवे चन्द्रे ।

इति मान्तवर्गः ।

( यैकम् )

यो ना वायौ यमने या यात्रातिधूमितत्यागेषु ।
वारणयोगसमञ्ज्ञायानेषु पुमांस्तु गन्तरि विख्यातः ॥ १ ॥
ज्या मातरि वसुधायां मौर्व्यां द्यु क्लीबमह्नि गगने च ।
ना ज्वलने द्यौस्त्रिदशालयत्रिदशवर्त्मनोर्योषित् ॥ २ ॥

( यद्विकम् )

अब्यः स्यात् पङ्कजे पुंसि त्रिषु रम्ये च नाविके ।
अर्थ्यं शिलाजतुन्यार्थ्यं बुधे न्याय्ये च वाच्यवत् ॥ ३ ॥
अन्त्यस्तु पुंसि मुस्तायामन्तोद्भूतेऽधमे त्रिषु ।
अर्घ्यमर्घस्य योग्ये स्यादर्घार्थेऽपि च वाच्यवत् ॥ ४ ॥
अन्योऽसदृशेतरयोरर्य्यः स्यात् स्वामिवैश्ययोः ।
आस्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ ॥ ५ ॥
इज्या दानेऽध्वरेऽर्चायां सङ्गमे स्त्री गुरौ त्रिषु ।
इभ्या करेणुशल्लक्योः स्त्रियामाढ्ये तु वाच्यवत् ॥ ६ ॥
कश्यं त्रिषु कशार्हे स्यात् क्लीबं मद्याश्वमध्ययोः ।
कन्या कुमारिकानार्य्योरोषधीराशिभेदयोः ॥ ७ ॥
क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च ।
कल्यं प्रभाते क्लीबं स्यात् कल्यो वाक्श्रुतिवर्जिते ॥ ८ ॥
सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ।
उपायवचनेऽपि स्यात् त्रिषु मद्ये तु योषिति ॥ ९ ॥
कक्ष्या बृहतिकायां स्यात् काञ्च्यां मध्येभबन्धने ।
हर्म्यादीनां प्रकोष्ठेऽपि कार्य्यं हेतौ प्रयोजने ॥ १० ॥
काव्यं ग्रन्थे पुमान् शुक्रे काव्या स्यात् पूतनाधियोः ।
कांस्यं वाद्यान्तरे पानपात्रे स्यात् तैजसान्तरे ॥ ११ ॥
कायः कदैवते मूर्त्तौ सङ्घे लक्ष्यस्वभावयोः ।
मनुष्यतीर्थे कायं स्यात् क्रिया नृपायचेष्टयोः ॥ १२ ॥
आरम्भे निष्कृतौ पूजासम्प्रधारणकर्मसु ।
शिक्षाचिकित्साकरणे कुड्यं स्यात्तु नपुंसकम् ॥ १३ ॥

विलेपने च भित्तौ च तथा कौतूहलेऽपि च ।
कुल्यं स्यात् कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च ॥ १४ ॥
कुल्या पयःप्रणाल्याञ्च नद्यां जीवन्तिकौषधौ ।
कुलोद्भवे कुलहिते त्रिषु मान्ये पुनः पुमान् ॥ १५ ॥
कृत्या क्रियादेवतयोस्त्रिषु विद्विष्टकार्य्ययोः ।
गयः स्यात् पशुराजर्ष्योर्भेदे तीर्थे पुनर्गया ॥ १६ ॥
गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् ।
गोसमूहे त्रिलिङ्गन्तु गोदुग्धादौ च गोहिते ॥ १७ ॥
ग्राम्यं स्त्रीकरणे क्लीवेऽश्लीलप्राकृतयोस्त्रिषु ।
गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः ॥ १८ ॥
गृह्यं गुदे ग्रन्थभेदे क्लीवं शाखापुरे स्त्रियाम् ।
गृह्यासक्ते मृगादौ ना त्रिषु चास्वैरिपक्षयोः ॥ १९ ॥
गेयन्तु गीते गेयः स्याद् गातव्ये गायने त्रिषु ।
गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत् ॥ २० ॥
चव्यन्तु चविके क्लीवं वचायामपि योषिति ।
चयः समूहे प्राकारे मूलबन्धे समाहृतौ ॥ २१ ॥
चित्यं मृतकचैत्ये स्याच्चित्यामृतचितौ स्त्रियाम् ।
चैत्यमायतने बुद्धबिम्बे नोद्देशपादपे ॥ २२ ॥
चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत् ।
छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः ॥ २३ ॥
पालनोत्कोचयोर्दीप्तिसच्छोभापङ्क्तिषु स्त्रियाम् ।
जया जयन्तीतिथिभित्पथ्यामातृसखीषु च ॥ २४ ॥
अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे ।
जन्यं हट्टे परीवादे सङ्ग्रामे च नपुंसकम् ॥ २५ ॥
जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् ।
त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः ॥ २६ ॥
वरस्निग्धेऽथ जन्युः स्यात् पुंसि प्राण्यग्निधातृषु ।
त्रयी त्रिवेद्यां त्रितये न ना तार्क्ष्योऽश्वशालयोः ॥ २७ ॥

